# A TRIENNIAL CATALOGUE OF MANUSCRIPTS

COLLECTED DURING THE TRIENNIUM

## 1922-23 TO 1924-25

FOR THE

## GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY, MADRAS

BY

MAHĀMAHŌPĀDHYĀYA VIDYĀVĀCASPATI
PROFESSOR S. KUPPUSWAMI SASTRI, M.A., I.E.S.
CURATOR, GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY, AND PROFESSOR OF SANSKRIT AND COMPARATIVE PHILOLOGY, PRESIDENCY COLLEGE, MADRAS

*Prepared under the orders of the Government of Madras*

***Volume V—Part 1—Sanskrit B***

MADRAS
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS
1932

# A TRIENNIAL CATALOGUE OF MANUSCRIPTS.

## 1922-23 TO 1924-1925.

## VOLUME V.

### PART I—SANSKRIT—B.

R. No. **4301.**

Paper. 10¾ × 9¾ inches. Foll. 124. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Nārāyana Nambūdirippād, Puvalli-mana, Chalasseri post, Malabar district.

Fol. 124*b* is left blank.

ऋक्प्रातिशाख्यव्याख्या—वाक्यप्रदीपिका.

RKPRĀTIŚĀKHYAVYĀKHYĀ : VĀKYAPRADĪPIKĀ.

A commentary on the Ṛkprātiśākhya, which work has been described under No. 879 of the D.C.S. MSS., Vol. II. By Pārṣada

Complete in 18 Paṭalas.

**Beginning:**

परापरे ब्रह्मणि यं सदाहुः वेदात्मानं वेदनिधिं मुनीन्द्राः ।
तं पद्मगर्भं परमं त्वादिदेवं प्रणम्यर्चां लक्षणमाह शौनकः ॥

परं च अपरं च परापरं परं ब्रह्म अपरं ब्रह्म च परापरे ब्रह्मणि परं ब्रह्म मनसा ध्यानगम्यं सदात्मकम् । अपरं ब्रह्म तु शब्दात्मकं जपादिषु कर्मसु यत् प्रयोज्यं तत् शब्दाख्यानम्—अग्निमीळे इत्यादि । तदुक्तम्—द्वे ब्रह्मणी वेदितव्ये ।

* * * *

इदानीं संहितापदक्रमस्वरूपमाह—

एवं ते विवृत्या त वदन्ति नितुजशब्दौ क्षारौचारणत्रप्रतृणणमुभया-न्तरादुभयव्याप्तिमाहुस्तुतो अध्वनाकोभयाख्याः ।

**Colophon :**

इति प्रातिशाख्यव्याख्यायां वाक्यप्रदीपिकायां प्रथमः पटलः ॥

**End :**

इत्याह भगवान् शौनकः । अपीत श्लोकाः । गायत्र्यादीनि छन्दांसि ।

तानि सर्वमिदं कृत्स्नं त्रैलोक्यं सचराचरम् ।
धन्यं यशस्यमायुष्यं पुण्यं पुष्टिकरं शुभम् ॥
आत्यन्तिकं चापवर्ग्यं छन्दसां ज्ञानमुत्तमम् ।
छन्दोज्ञानात्परं ज्ञानं नान्यदस्तीति मे मतिः ॥
आहुर्यस्माद्द्विजश्रेष्ठ तस्मात्तत्र प्रयत्नतः ।
नमोऽस्तु निखिलेशाय शङ्खचक्राब्जधारिणे ।
क्षीराब्धितनयेशाय राजीवाक्षाय विष्णवे ॥

**Colophon:**

इति प्रातिशाख्यव्याख्यायां पार्षदकृतायां वाक्यप्रदीपिकायामष्टादशः पटलः ॥

समाप्तश्चायं ग्रन्थः ॥

---

## R. No. 4302.

Paper. 10¼ × 9¼ inches. Foll. 128. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Nīlakaṇṭha Nambūdiri, Karanjattur-mana, Oorakam post, Cochin State.

नीतितत्त्वाविर्भावव्याख्या

NĪTITATTVĀVIRBHĀVAVYĀKHYĀ.

Foll. 127 and 128 are left blank.

A commentary on Cidānandapaṇḍita's Nītitattvāvirbhāva, which work has been described under R. No 3300 ante : by Paramēśvara, son of Gōpālikā and Ṛṣi who was the son of Paramēśvara, the commentator of Nyāyakaṇikā and a disciple of Bhavadāsa, the paternal uncle of the commentator. It is stated that the commentator has also written a commentary called Gōpālikā on Sphōṭasiddhi and had another paternal uncle called Vāsudēva.

Incomplete.

**Beginning :**

. . . . . . ग्रन्थे तत्त्वाविर्भावसंज्ञके ।
चिदानन्दकृतौ नत्वा गुरूनपि यथामति ॥

प्रकरणमारिप्सुरभिमतां देवतां नमस्यति—वन्दे इति । अहमिन्दुचूड-मुकुन्दयोरेकमङ्गं वन्दे । महादेवपुरुषोत्तमयोरसाधारणं विग्रहं कायत्राङ्मनः-प्रह्वतालक्षणया प्रणत्या पूजयामि । इन्दुचूडमुकुन्दौ विशिनष्टि—कल्याण-योरिति । देवतात्वादेव कल्याणत्वस्य प्राप्तत्वात् कल्याणयोरिति पुनर्वचन-मतिशयद्योतनाय ।

* * * *

नीतितत्त्वानामाविर्भावायेति । अर्थाविर्भावाय हि तानि निबन्धनानि । इदं तु युक्तिमात्राविर्भावाय प्रकरणमिति । ननु प्रकरणान्यपि तत्र मण्डन-मिश्रादिकृतानि सन्त्येव किं तवानेन प्रकरणेनात उक्तमाचार्यकृतिप्रकृ-तेरिति ।

* * * *

**Colophon :**

इति गोपालिकासूनुः ऋषेः पितुरनुग्रहात् ।
अन्तेवासी पितृव्यस्य भवदासस्य धीमतः ॥
चिदानन्दकृतावाद्यं व्याचष्ट परमेश्वरः ।
व्याख्यातुं कार्यवादं च समीहा तस्य सम्प्रति ॥
इति व्याख्यापयामास कार्यवादमिमं सुधीः ।
सुब्रह्मण्यो यथार्थाख्यो भ्रातुरेव च सूनुना ॥
वेदारण्यनिवासिन्या हैमवत्याः प्रसादतः ।
. . . . व्याख्यानं कर्तुमेषोऽध्यवस्यति ॥

* * * *

एवं स्वतः प्रमावादं व्याख्यद्गोपालिकासुतः ।
वासुदेवपितृव्योक्तरीत्या केवलयैव तु ॥

* * * *

मनोविभववादोऽयं व्याख्यातस्साम्प्रतं पुनः ।
मरुद्विहाय प्रत्यक्षवादो व्याख्यायते स्फुटम् ॥
यो न्यायकणिकाव्याख्यां चकार परमेश्वरः ।
तस्य पौत्रेण तत्सूनोरेवान्तेवसता स्वयम् ॥

**End:**

विशेषाभाववादेऽस्मिन् प्रपञ्चो वार्त्तिकादिषु ।
द्रष्टव्य इति कृत्वेह सङ्क्षेपोक्तिरियं कृता ॥
प्रणिपत्य गणाधीशं व्याख्येयं क्रियत मया ।
समवायनिरासस्य क्षन्तुमर्हन्ति साधवः ॥

तार्किकैरेकदेशिभिस्समवायोऽङ्गीकृतः । तेनोभयान् प्रत्याह—एवं समवायोऽपि न सेद्धुमर्हतीति ।

* * * *

व्यापकनिवृत्त्या च नास्य प्रत्यक्षमित्याह—कश्च समवाय.

---

R. No. **4303.**

Paper. 11 × 9⅞ inches. Foll. 24. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. belonging to the Sanskrit College Library, Tiruppanattura, Cochin State.

Foll. 23*b* and 24 are left blank

सुभद्राहरणम्.

SUBHADRĀHARAṆAM.

Same text as that described under R. No. 2720 ante, wherein see for the beginning. By Nārāyaṇa, son of Brahmadatta.

Contains the Sargas 17—20 complete.

**End:**

वीतव्यथस्य युधि मन्युमतः पुरोधा-
स्तस्याभिमन्युरिति नाम चकार काले ।
मीलद्द्युतिस्स ववृधे विधिभिस्तदीयैः
पक्षे वलक्ष इव बालविधुः करेण ॥

अवरजैः प्रतिविन्ध्यपुरस्सरैर्द्रुपदजातनयैस्स सहैधत ।
पितृसमैः पितृतुल्यपराक्रमो हरिकिशोरकयूथपलीलया ॥

विश्वामित्रस्य गोत्रे द्विजमणिरभवद्ब्रह्मदत्ताभिधानः
श्राद्धस्वाध्यायपूतस्सकलगुणनिधिश्शास्त्रवित्काव्यशौण्डः ।
अन्तेवासी विपश्चिद्द्विपहारिणभृतो जातवेदोऽष्टमूर्त्योः
तत्सूनुः काव्यमेतद्व्यधित बुधमुदे ख्यातनारायणाख्यः ॥

**Colophon:**

इति ब्रह्मदत्ततनयविरचिते सुभद्राहरणे विंशति(तम): सर्गः ॥

समाप्तं चेदं महाकाव्यम् ॥

---

R. No. **4304.**

**Paper.** 10¾ × 9⅞ inches Foll. 160. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. belonging to the Sanskrit College Library, Tiruppanattura, Cochin State.

Fol. 160*b* is left blank.

**प्रक्रियामञ्जरी.**

PRAKRIYĀMAÑJARĪ

A short commentary on Pāṇini's Aṣṭādhyāyīsūtras in the original order: by Vidyāsāgaramunīndra.

Contains from the fourth Pāda (wants the beginning) of the VI Adhyāya to the end of the VIII Adhyāya.

**Beginning:**

शाधीत्येत[सि]त्सति शिष्टेन प्रत्ययस्वरेणान्तोदात्तं स्यात् । आद्युदात्तमपि छन्दसि दृश्यते । तच्च हेः पित्त्वे सति धातुस्वरेणोपपद्यते नान्यथा तस्माद्वश्यं छन्दसि हेः पित्त्वं विकल्पेन विधेयम् । यमिरमीति । यम उपरमे, रमु क्रीडायां, णम प्रह्वत्वे, गमॢ सृपॢ गतौ, हन हिंसागत्योः, मन ज्ञाने । वनतिरिति वन षण सम्भक्तौ । तितुत्रेत्यादिनेट्प्रतिषेधः ।

* * * *

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविद्यासागरमुनीन्द्रविरचितायां प्रक्रियामञ्जर्यां षष्ठस्याध्यायस्य चतुर्थः पादः ॥

अध्यायश्च समाप्तः ॥

**End:**

यद्गुणसंवृत उच्चारितस्तद्गुण एव षोढा भिन्नस्यापि मात्रिकस्यापि विवृतस्यापि स्यात् तत्राह—संवृतेन त्विति । सर्वगुण इति । षोढा भिन्नो विवृतः । षोढाभिन्नस्संवृतो भवतीत्यर्थः ॥

विद्यासागरसम्भूतवाक्यरत्नप्रभावलिः ।
विराजते पाणिनीयसूत्रसन्दोहगुम्फिता ॥
श्रीकाम्देवे जगतीं प्रशासति श्रीशैलकन्यापतिभक्तिधारिणि ।
विद्योदधेरुत्थितमेतदादरात् टीकामृतं भूसुरहर्षवर्धनम् ॥

**Colophon:**

इति विद्यासागरमुनीन्द्रविरचितायां प्रक्रियामञ्जर्यामिष्टमस्याध्यायस्य चतुर्थः पादस्समाप्तः ॥

समाप्तोऽष्टमाध्यायश्शास्त्रं च ॥

---

R. No. **4305.**

Paper. 10¾ × 9⅞ inches. Foll. 110. Lines, 20 in a page. Dēvanāgarī Good.

Transcribed in 1923-24 from a MS. of M.R Ry. Bhavadāsa Nambūdiri, Mandanattu-mana, Othapalam post, Malabar district.

Fol. 110*a* gives the name of the owner of the original MS. Fol. 110*b* is left blank.

पञ्चपादिकाविवरणव्याख्या—भावद्योतनिका.

PAÑCAPĀDIKĀVIVARAṆAVYĀKHYĀ : BHĀVADYŌTANIKĀ.

A commentary on Prakāśātman's Pañcapādikāvivaraṇa, which itself is a commentary on Padmapādācārya's Pañcapādikā, which happens to be a commentary on Śaṅkarācārya's Brahmasūtrabhāṣya : by Citsukhamuni, disciple of Jñānōttamapūjyapāda.

This commentary is also called Tātparyadīpikā.

Complete.

**Beginning:**

स्वमाननखनिर्भिण्णमहामोहामरारये ।
नमोऽस्तु नरसिंहाय सच्चिदानन्दरूपिणे ॥
प्रणम्य नरवा(पा)रीन्द्रं चित्सुखाख्येन योगिना ।
विरच्यते विवरणे सैषा तात्पर्यदीपिका ॥

चिकीर्षितस्य ग्रन्थस्याविघ्नपरिसमाप्तये प्रचयगमनाय च विशिष्टेष्टदेवतानमस्कारमङ्गलाचरणं विशिष्टाचारपरिप्रापितं सम्पादयति—पाठन

इत्यादिना प्रथमश्लोके न । जगतः पालने प्रयोजनत्वेन विषयभूतये(ते) । विमलसत्त्ववृत्तये विमलंच तत्सत्त्वं चेति विमलसत्त्वं रजस्तमोभ्यामस्पृष्टमिति यावत् । तस्मिन् वृत्तिर्वर्तनं तदुपाधिकतयावस्थानं यस्य स तथोक्तस्तस्मै ।

*  *  *  *

निष्प्रपञ्चमिति किं न स्यादित्यत आह--विशुद्धेति । वक्ष्यमाणद्वितीयसूत्रे इति शेषः ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखमनिविरचितायां विवरणतात्पर्यदीपिकायां प्रथमसूत्रं समाप्तम् ॥

**End:**

ननु शास्त्रादेव बन्धनिवृत्तिरस्तु किमन्वयव्यतिरेकाभ्यामित्यत आह—फलवचनानां चेति । आत्मनिश्चयादिति भागं व्याचष्टे—निरतिशयेति ।

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखमुनिविरचितायां विवरणभावद्योतनिकायां समन्वयसूत्रं समाप्तम् ॥

ग्रन्थग्रन्थितमिस्रं भिन्दाना तत्त्वबोधविधिचतुरा ।
मुनिना चित्सुखनाम्ना विवरणतात्पर्यदीपिका रचिता ॥

The scribe adds—

विवरणस्य या व्याख्या चित्सुखाचार्यनिर्मिता ।
पुरुषोत्तमविद्याख्यैर्लिलिखे सा सुशोभना ॥

---

## R. No. 4306.

Paper. 11 × 10 inches. Foll. 36. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Karuṇākara Menon Avargal, B.A., B.L., High Court Vakil, Ampalakat, Chalapuram, Calicut.

### जयमङ्गलापाठान्तराणि.

### JAYAMAṄGALĀPĀṬHĀNTARĀṆĪ.

This MS. gives the different readings of the Jayamaṅgalā, which is a commentary on Vātsyāyana's Kāmasūtra, described under No. 3909 of the D.C.S. MSS., Vol. VIII.

Apparently complete.

**Beginning :**

| पुटम्. | पङ्क्तिः. | मुद्रितपुस्तके. | | तालपुस्तके. |
|---|---|---|---|---|
| १ | ४ | भिक्षुरिति | ... | भिक्षुश्चेति. |
| ,, | ६ | तमुपायमा | ... | तदुपायं प्र. |
| ,, | ८ | वोपादेयौ | .. | वोपायौ. |
| ,, | ,, | शास्त्र | | स्वशास्त्र. |
| ,, | ९ | परिज्ञानम् | ... | विज्ञानम्. |
| ,, | ,, | वक्ष्यति च | ... | वक्ष्यन्ति च. |
| ,, | १० | योगपरा | ... | योगः परा०. |
| ,, | १३ | ततच्छा | ... | यच्छा. |
| २ | १ | तथाचेदं | ... | तेषां वा यत्. |

**End :**

| | | | | |
|---|---|---|---|---|
| १०९ | ६–८ | अकृच्छ्रेति + ददाति. | | अकृच्छ्राधिगतवित्तः येन क्लेशं विनान्वयपुत्रिगतनिधिलाभाद्वा राजप्रसादाद्वा धनमवाप्तं सोऽकृच्छ्रेण धनं ददाति । सङ्घर्षितः स्पर्धमानोऽन्येन गम्येन बहु पृच्छति. |
| ,, | ९ | सुभगमानीति | ... | सुखेन दाता सुभगमानी. |
| ,, | १० | दुर्भग + प्रकटयितुं श्लाघनिकः. | | स तथाविधमात्मानं प्रकटयितुम्. |

---

R. No. **4307.**

Paper. 11 × 10 inches. Foll. 76. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Rāmanātha Śāstrigaḷ, Rameswaram.

Foll. 75*b*—76*b* are left blank.

श्रुतिसूक्तिमाला, विकासिनीव्याख्यासहिता.

ŚRUTISŪKTIMĀLĀ WITH THE COMMENTARY VIKĀSINĪ.

Slightly different from the work described under R. No. 2200 ante, wherein see for the beginning. By Īśvarabhaṭṭōpādhyāya, son of Bhēruṇḍa-Nṛsiṁhayajvan.

The text is also called Caturvēdatātparyasaṅgraha.

Contains the stanzas 65—150 complete.

**End:**

स्वेनोक्तश्लोकन्यूनातिरेकपरिहारार्थं श्लोकसङ्ख्यां वदन् स्तोत्रफलमाह—पञ्चाशदिति ।

पञ्चाशदुत्तरशता श्रुतिसूक्तिमाला भोगावली भुजगराजमनोहरा ते ।
वेदेषु सक्तिमपरागमवैदिकेषु तन्त्रेषु भक्तिमतुलां त्वयि च प्रसूते ॥

पञ्चाशच्छ्लोकाधिकशतश्लोकात्मिका भुजगराजमनोहरा भूषणभूतशेषवन्मानोहरा भोगावली ते श्रुतिसूक्तिमाला श्रुतयो वेदा एव कल्पद्रुमास्तेषां सूक्तय एव सुमनसः तैर्निर्मिता माला श्रुतिसूक्तिमाला वेदेषु सक्तिमादरमवैदिकेषु तन्त्रेषु अपरागमनादरं अतुलामसदृशीं तुल्यरूपां भक्तिं च प्रसूते उत्पादयति ।

मिथ्याकल्पितभोगमोक्ष . . . . . . . स्थापन-
व्यग्राणामचिरप्रभावविबुधप्रेम्णा शरीरात्विषाम् ।
मूर्भिष्वे(र्धस्वे)व दुरात्मनां विरचिता निर्घातपाताः परे
विद्वद्भिः परमेश्वरश्रुतिकथातात्पर्यसङ्ग्राहकैः ॥

**Colophon:**

इति श्रीकविवादिभेरुण्डनृसिंहयज्वतनूजेश्वरभट्टोपाध्यायविरचिता श्रुतिसूक्तिमालाविकासिनी समाप्ता ॥

The scribe adds—

कल्यादौ (च) चतुस्सहस्रवर्षे चाब्दैकविंशोन्नते
पुष्ये मासि विलम्बिनाम्नि समगादष्ट . . . . . . . वै मौद्गलः ।
. . . . . . . . . . . . . . . कवेरजायास्तटे
कंसग्रामनिवासकस्सुदर्शनस्साधं विमानोज्ज्वलः ॥

R. No. 4308.

Paper. 11 × 10 inches Foll. 160. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Vidvān Vānamāmalai Ayyangār Avargal, Nanguneri, Tinnevelly district.

श्रुतप्रकाशिकाव्याख्या.
ŚRUTAPRAKĀŚIKĀVYĀKHYĀ.

A commentary on Sudarśanācārya's Śrutaprakāśikā which itself is a commentary on the Śrī-Bhāṣya of Rāmānujācārya.

Contains the Jijñāsādhikaraṇa complete.

**Beginning :**

जयति कमलकन्याकान्तविक्रान्तिभूमा
जगति विधिशिवादित्राणजोत्कर्षसीमा ।
अघटितघटनानामद्भुतानां विधाता
प्रघटितघनसम्पन्मङ्गलानां विधाता ॥

कल्याणमावहतु कल्पसहस्रकोटीः श्रीकेशवस्य महिषी यतिराजवल्ली ।
उद्भूतभूतपुरपुण्यकृतावतारा माहग्जनप्रवणमान्यकटाक्षधारा ॥

* * * *

शठारातिमुखास्सर्वे हठादस्मद्गुरूत्तमाः ।
अनुग्रहाय कल्पन्तां निरवग्रहसंपदे ॥
पाराशर्यपदाम्भोजे प्रणमामि प्रदक्षिणम् ।
ययोः स्मरणमात्रेण जायन्ते ब्रह्मवित्तमाः ॥

* * * *

व्यासाचार्यो विपश्चिज्जयति विमलवाग्वृत्तिविष्फारितानि(ति)-
च्छिन्नप्रच्छन्नबौद्धप्रभृतिकुमतिधीबद्धराद्धान्तचूडः ।
श्रीमद्रामानुजार्यस्फुरदुरुफणितिस्फारकल्याणदेवः
स्वोदन्तोद्दामदन्तिप्रकटकटतटोद्घट्टिताशान्तशीलः ॥
नाथार्ययामुनयतीन्द्रसुदर्शनार्यवेदान्तदेशिकमहार्यमुखा महान्तः ।
सम्यग्जयन्तु शरदामयुतं सहस्रं स्वोदन्तधावितकुदृष्टिजनप्रलापाः ॥

श्रीमद्वरप्रदगुरुं श्रितपारिजातं तद्वद्धवारिधिसुधांशुरमानिवासम् ।
तच्चन्द्रकल्पतरुलक्ष्मणदेशिकं च संचिन्तयामि सततं सकलार्थसिद्ध्यै ॥

जयति यतिराजवाणी जनिभयनिर्भेदनिर्भरकृपाणी ।
जीवति यत्र पुराणी जितदोषा वाग्वधूरफुरद्वेणी ॥

क्वाहं मितंपचमतिः क्व च लक्ष्मणार्य-
वाग्जृम्भणं क्व च सुदर्शनसूरिसूक्तिः ।
चित्रं तथापि च तयोर्विवृतौ नियुङ्क्ते
श्रीमद्वरप्रदगुरोः करुणा प्रगल्भा ॥

* * * *

व्यासार्यसूक्तिमिह वीतसमस्तदोषां व्याकुर्वतां मतिमतामभिनन्दनार्थम् ।
दास्यं कृतं किमपि चम्पकनायकेनेत्यङ्गीकुरुध्वममुमार्यजनाः प्रबन्धम् ॥

* * * *

अत्र तावत् श्रीरङ्गराजदिव्यानुग्रहनिबन्धनव्यासाचार्यापरनामा निरतिशयमहिमा सुदर्शनभट्टार्यो भवभयाभितप्तजनभागधेयवैभवभावितावतरणभगवद्रामानुजमुनिभणितशारीरकभाष्यमखिलजगदुज्जिजीवयिषया व्याचिख्यासुः शिष्टाचाराद्यवधृताभीष्टसाधनताकमिष्टदेवतानमस्काररूपं मङ्गलं सच्छास्त्रपरित्राणाय वाचनिकमारचयति— वरदमित्यादिना । श्रीरङ्गनाथस्य स्वकुलाधिदैवतस्य सन्निहितत्वेऽपि इष्टानिष्टप्रापणनिवारणप्रख्यापकसमाख्यतया, स्वस्य भाष्यार्थप्रदापयितृतया, स्वाचार्यवरदार्यसमीहितदैवततया भाष्यकारमुखेन सिद्धान्तस्थापकतया, यामुनार्यप्रार्थनासमर्थनेन सिद्धान्तविजृम्भणहेतुतया च प्रथमं करिगिरिपतिरेव प्रस्तूयते ।

**End :**

वस्तुतस्तु सामर्थ्यरूपलिङ्गस्य प्रकरणात् प्राबल्यप्रतिपादनात् अस्थूलत्वादिविशेषितानन्तत्वादीनामिव ध्रुवानुस्मृतीत्यादीनामपि सर्वत्रोपसंहारमित्याशयेनाह—वस्तुसामर्थ्यस्येत्यादि । अपरोक्षरूपत्वं वै विशेषः दृशिव्यवहारप्रयोजक इति भावः । वासना बहुतरानुवृत्तिः पश्यामीत्यादिशब्देनैकान्तहृदया.

R. No. **4309.**

Paper. 10⅜ × 9⅝ inches. Foll. 18. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Mānavikrama Anujan Raja, Second Prince, Calicut.

Fol. 18 is left blank.

भगवन्नामचिन्तामणिः.

BHAGAVANNĀMACINTĀMAṆIḤ.

Similar to the work described under R. No. 1748 ante. By Vēṅkaṭakṛṣṇasūri, son of Appādīkṣita.

Contains the first Prakaraṇa complete and the second incomplete.

**Beginning:**

पुष्करः—

कीर्तयन् श्रद्धया युक्तो हरेर्नाम सदा नरः ।
स पूतो जायते नित्यं स्वर्णस्तेयादिपातकात् ॥

ब्रह्मरहस्ये श्रीभगवान्—

नियतं ब्रह्मनामानि जले वा कीर्तयेद्यदि ।
महतोऽप्येनसो युक्तमुद्धरामि न संशयः ॥

वायुपुराणे—

शृण्वन् गायन् स्मरन्नित्यं हरिनामानि मानवः ।
पापैर्न सज्जते घोरैः पद्मपत्रमिवाम्भसा ॥

* * * *

**Colophon:**

इति श्रीसर्वतन्त्रस्वतन्त्रस्याप्पादीक्षितस्य पुत्रेण वेङ्कटकृष्णसूरिणा विरचिते भगवन्नामचिन्तामणौ प्रमाणसङ्ग्रहाख्यं प्रथमं प्रकरणं समाप्तम् ॥

**End:**

न तथा विविधैर्यज्ञैरग्निष्टोमादिभिर्विभुः ।
आराध्यते यथा भक्त्या विष्णु(ः)संकीर्तनादिभिः ॥

इत्यादिवचनस्य नामकीर्तनादिसहितभक्तियोगविषयत्वात् ।

न दानैर्न तपोभिर्वा न पुष्पैर्नानुलेपनैः ।
तोषमेति महाबुद्धे यथा कीर्त्या जगत्पतिः ॥

इत्यादिवचनस्य भक्त्यङ्गेषु मध्ये नामकीर्तनमभ्य[व](र्हि)तमित्येवंपरत्वात्.

## R. No. 4310.

Paper. 10¾ × 9⅜ inches. Foll. 16. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Āttān Varadācāriyar, Kīḻattirumāḷigai, Alwartirunagari, Tinnevelly district.

Fol. 16 is left blank.

### भद्राद्रिरामायणम्.

### BHADRĀDRIRĀMĀYAṆAM.

A treatise narrating the story of the Rāmāyaṇa. The stanzas herein are addressed to god Rāma worshipped at Bhadrācala, in the Godavari district.

Contains the Bālakāṇḍa complete and breaks off in the Ayōdhyākāṇḍa.

**Beginning:**

श्रीमाधवप्रणयभूमाभिवृद्धतमधीमानंनीयशठजित्-
प्रेमात्तजन्मयुतसामान्यबुद्धिजितकामादिदोषविततिः ।
भूमानवोच्चरितभीमाघहारिनिजनामातिवेलमहिमा
रामानुजो वचनसीमातिवर्तिघनधामा विभुर्विजयते ॥

अर्वाननानियतिरुर्वादरा स्फुरति शर्वादिदेवविन(नु)ता
प्रह्वा यदीयशुभजिह्वाग्रगा निखिलबह्वाविलान्यमद(त)भित् ।
श्रीभाष्यमुख्यतमशोभावहस्वकृतिराभातु चेतसि सदा
वाता(दा)हवेष्वधिकमोदावहस्स मम वेदावतंसगुरुराट् ॥

श्रीकेसराङ्कमुनिवाकेष्वतिप्रणयलोकेशरङ्गपतये
व्याख्याप्रदस्तादितभूख्यातपद्य इति योऽख्यापि देशिकवरैः ।
शेषाकृतिर्विविधदोषापहं प्रबलतोषावहस्स भजतां
दद्योघ(नम्योऽन)वद्यपदगम्यो गिरां जयति रम्योपयन्तृमुनिराट् ॥

ःारार्थवेदिगुरुपा(दा)र्चितं वरदनारायणं गुरुवरं
श्रीभावनार्यमपि . भाविनूपुरचयामाषि वेङ्कटविभुम् ।
हे मानस त्वमुरुभूमान्वितं प्रणम रामानुजाह्वयगुरुं
श्रीवेङ्कटार्यमपि भावे विधेह्यखिलमावेदयन्तमिहनं(मनिशम्) ॥

* * * *

वामाङ्कभागकृतरामान्वयं समभिरामाङ्कं स्वरिदरं
चापं शरं दधतमापन्नरक्षणकलापण्डिताग्रनयनम् ।
सव्याश्रितावरजमव्याजबन्धुमनिशव्यानिलात्मजनुषं
भद्राचलेश्यमजरुद्रादिवन्द्यमयि भद्राय भावय मनः ॥

* * * *

श्रीवत्सवंशजनुरावर्तितार्यपदसेवर्द्धिराघवगुरुं
श्राव्यं सुधीभिरनुभाव्यं करोति रघुकाव्यं स्वलङ्कृतियुतम् ।
सन्तस्समाकलितवन्त(:) प्रबन्धमिम(म)न्तर्बहिस्फुटरसं
स्वादाभिवृद्धघनमोदा दयां कुरुत पादाश्रिते कृतिकृति ॥
देवर्षिणा विधिभुवावर्णितं रघुप भावत्कमङ्गलगुणं
श्रुत्वा मुनिर्मनसि धृत्वा मुदं तदनु गत्वा ददर्श तमसाम् ।
बाणाहतं रुधिरशोणाकृतिं नयनकोणादवेक्ष्य विहगं
श्लोकं जगामु(वु)दितशोकं सुधीसुकृतपाकं धराश्रवणभूः ॥
तन्मानिषादपदवन्मान्यपादयुतमुन्मादनं स्वमनसं (सुमनसां)
पद्यं समस्तजनहृद्यं विमृश्य मुनिमुद्यन्महाद्भुतरसम् ।
श्लोकोऽयमस्त्वनृतवाको न तेऽत्र कुरु लोकोत्तरोन्नति(त)मुने
रामायणं सकलकामावहं त्वमिति रामात्मभूस्स निरगात् ॥

* * * *

भद्राद्रिनाथ तव मुद्रायुते जयतु मुद्राशिते तनुभृतां
रामायणे सकलकामावहे विततभूमास्पदेऽतिललिते ।
श्रीवीक्ष्यभावगुरुसेवीड्यसूक्तिशुभधीवीरराघवकृते
श्रीबालकाण्डमिदमाबालवृद्धमखिला(बाध)बोधजनकम् ॥

**Colophon:**

बालकाण्डं समाप्तम् ॥

**End:**

श्रुत्वा तदुक्तिमथ धृत्वा शुचं तव तु कृत्वा पदाम्बुजनतिं
पादावनीं निखिलखेदापहां स परमादाय मूर्ध्नि भरतम् ।

गङ्गां चलल्लहरितुङ्गां प्रपद्य स पतङ्गांशुरोधिविपिनां
दाशेन कीर्तिविहिताशेन नौषु विनिवेशेन तारितबलम् ॥
ग्रामं स नन्दिमुखमामन्द्यभीर . . वामं समेत्य भरत
छत्रं दधत्पिहितमित्रं सुधांशुकरमित्रं च चामरयुगम् ।
त्वत्पाद्य(दु)कां च सकृदुत्पादितप्रणतितत्पारिताखिलजनो
यावत् त्वदागमनमावर्जितप्रकृतिभावस्थितो . . . . ॥

---

R. No. **4311.**

**Paper.** 10¼ × 9¼ inches. Foll. 94. Lines, 20 in a page. **Grantha. Good.**

Transcribed in 1923-24 from a MS. of M.R.Ry. Vānamāmalai Ayyangār, Nanguneri, Tinnevelly district.

Fol. 94 is left blank.

भेदधिक्कारन्यक्कारः.

BHĒDADHIKKĀRANYAKKĀRAḤ.

An adverse criticism of Nṛsiṁhāśrama's Bhēdadhikkāra, which work has been described under No. 4965 of the D.C.S. MSS., Vol. IX: by Nṛsiṁhadēva of Śrīvatsagōtra, sister's son of Vēdāntācārya of Kauśikagōtra.

Contains the Paricchēdas one and two only.

**Beginning:**

शुक्लाम्बरधरं ( . . . ) शान्तये ॥
यस्य द्विरदवक्त्राद्याः ( . . . ) तमाश्रये ॥
श्रेयःपदं दिशति यस्य कटाक्षलेशो
भास्वानिव प्रकटयत्यपि तत्त्वजातम् ।
तं कौशिकान्वयपयोनिधि(पूर्णचन्द्र-
माम्नायमालिगुरु)मन्त्रहमाश्रयामः ॥
विलसतु हृदये मे विश्वनिर्माणदक्षो
विविधशुभगुणाढ्यो विश्वरक्षैकहेतुः ।
. . . . . . . . . . . णीयास्यचन्द्रो
वरुणनिलयकन्यावल्लभो वाजिवक्त्रः ॥

रामानुजार्यनिगमान्तगुरू वि · ता
. . . . . . . . . . . . . . . . णौ ।
मानैः प्रसिद्धविभवैः परजीवभेदः
प्रत्यर्थिभङ्गकरणाय महागुरून् · ॥

इह . . . . . (भवाभिसन्त)प्तजीवलोकभागधेयकृपावन्तं वदन्त- . . . . तदुज्जीवनाय वेदान् प्रवर्त्य तत्र पूर्वभागे नाराय(ण) . . . . . . त्तरभागेन च ज्ञानयोगं तत एव पृथगात्मानमित्यादिना भेदोपासनं चाशेषशेषभावरू . . . . . . . . देवश्च(शु)कशौनकपराशरपाराशर्याश्च विस्तारयामासुः ।

* * * *

न चेश्वरस्यातीन्द्रियतया न तद्भेदस्य प्रत्यक्षयोग्यता ऐन्द्रियिकप्रति-योगिकस्यैव भेदस्य प्रत्यक्षयोग्यत्वादिति वाच्यम्; ऐन्द्रियिकप्रतियोगिकत्वं न योग्यता मनसि घटत्वाभावस्य प्रत्यक्षत्वप्रसङ्गात् घटो(टे मा)नसत्वाभाव-स्याप्रत्यक्षत्वप्रसङ्गाच्च ।

* * * *

नाहमीश्वरो नाहं देवदत्त इत्यादिभेदप्रत्ययस्य बाधकाभावे प्रामाण्याच्च जीवभेदः प्रामाणिक इति ।

**Colophon:**

इति श्रीवत्सकुलजलधिसुधानिधिना[निखिलता ?] कुशिककुलशिरोमणि-वेदान्ताचार्यभागिनेयेन श्रीनृसिंहदेवेन विरचिते भेदधिक्कारन्यक्कारे प्रमाण-निरूपणम् ॥

**End:**

तस्मात्तत्त्वमसीत्याद्युपसंहारोऽप्ययुक्तः ।

तस्मात्तत्त्वमसीत्यादेस्सत्यज्ञानसुखात्मकम् ।
जीवा(द्) ब्रह्म पृथग्भूतं द्वैतज्योतिरतोऽस्तु ते ॥

तस्माज्जीवेशभेदा(दस्य) ना(ह)मीश्वर इत्यादिप्रमाणसिद्धत्वात् भगवतः शेष(षि)त्वं सिद्धमिति सर्वं समञ्जसम् ॥

**Colophon:**

इति श्रीवत्स(कुशिक)कुलजलधिशिशिरकरनिगमशिखरवेद्यविद्याकुमुदिनीविकासकरस्य वेदान्ताचार्यस्य भागिनेयेन वत्सकुलतिलकेन महा(श्रीनृसिंह)देवेन विरचिते भेदधिक्कारव्याख्याने द्वितीयः परिच्छेदः ॥

---

## R. No. 4312.

Paper. $10\frac{7}{8} \times 9\frac{5}{8}$ inches. Foll. 110. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. K. C. Valiya Rāja of Kottakkal, Malabar district.

पद्यवृत्तिः.

PADYAVṚTTIḤ.

Same work as that described under R. No. 4181 ante, wherein see for the beginning.

Contains from the middle portion of the third Pāda of the fourth Adhyāya to the beginning of the second Pāda of the sixth Adhyāya.

**End:**

समासेषु नानास्वरत्यं(त्वं) पदानां विहन्तुं विधानं समासस्वरस्य ॥

**Colophon:**

इति पद्यवृत्तौ षष्ठस्याध्यायस्य प्रथमः पादः ॥

बहुव्रीहौ प्रकृत्या पूर्वपदम्—

उक्तः पूर्वपदेनेह स्वरः पूर्वपदे स्थितः ।

संप्रकृत्या बहुव्रीहौ उदात्तं च(स्व)रितश्च सः ॥

* * * *

प्रसवः प्रलपित्रोऽयमूर्ध्वशुष्कोऽथ गोवृषः ।

सूपमानात् क्तः—

उदात्तोऽन्तोऽस्य सोऽक्तान्तमुपमानाच्च यत्परम् ।

शशप्लुतं सुभुक्तं च त्रयं गत्यादि वर्तते ॥

---

## R. No. 4313.

Paper. $10\frac{7}{8} \times 9\frac{5}{8}$ inches. Foll. 8. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923-24 from a MS. belonging to Dēśamaṅgalam Manakkal, Shornur, Malabar district.

जागदीशव्यधिकरणविवेचनम्.

JĀGADĪŚAVYADHIKARAṆAVIVĒCANAM.

Foll. 1a—5a. Fol. 5b is left blank.
Similar to the work described under R. No. 2797 ante.
Incomplete.

**Beginning:**

वाच्यं ज्ञेयत्वादित्यादौ उक्ताव्याप्तिं वारयितुमव्यभिचरितत्वस्य पारिभाषिकत्वमभ्युपेत्य परिभाषया तेन बोध्यस्य यत्समानाधिकरणसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकयावदभावे स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यरूपस्य व्याप्तिलक्षणस्य तत्र सङ्गमनं करोति— अथेत्यादिना । समवायितया वाच्यत्वाभावस्य हेतुसामानाधिकरण्यं प्रतिपादयति ।

**End:**

तथापि विशेषरूपेण संसर्गतां वृत्त्यनियामकसम्बन्धेन प्रतियोगितां चाभ्युपगन्तृमते निरुक्तदोषाभावात्तन्मतमनुसृत्य स्थलान्तरधावनमिति ध्येयम्.

Foll. 6a—7a contain a portion of Sādhyōpādhisāmānyavyāptibhaṅga. Foll. 7b—8b are left blank.

---

R. No. **4314.**

Paper. 11 × 10 inches. Foll. 124. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Nārāyaṇa Nambūdirippāḍ, Kutalur-mana, Tritala, Malabar district.

Foll. 123b—124b are left blank.

शाब्दिकाभरणम्.

ŚĀBDIKĀBHARAṆAM.

A treatise on Sanskrit grammar dealing specially with the conjugation of verbs: by Hariyōgin alias Prōlanācārya

Complete.

**Beginning:**

विद्यानिधिं नमस्कृत्य सर्वदेवमयं हरिम् ।
शाब्दिकानामलङ्कारः क्रियते हरियोगिना ॥

अथ शब्दानुशासनम्—केषां शब्दानां? लौकिकानां वैदिकानां च। अथ किमात्मकं शब्दमभ्युपगम्येदं शब्दानुशासनमारभ्यते—ताव-द्वर्णात्मकमिति ब्रूमः। वर्णाः पुनरनित्या नित्या वा—तावन्नित्या इति वदामः। कुत एषां नित्यतावगतिः? प्रत्यभिज्ञानात्। तथा हि—यमह-मश्रौषं गकारं तमेतर्हि श्रृणोमीति प्रतिसन्धानमुत्पाद्यमानं दृष्टम्।

* * * *

तस्मादसन्देहार्थमध्येयं व्याकरणम्।

दीपज्वालाचलैर्वर्णैरभिव्यञ्जितमञ्जसा।
स्फोटान्वयमहं वन्दे रूपं विष्णोर्गुहाशयम्॥
बालेषु पाणिनीयाब्धिप्रवेशभृशभीरुषु।
मयैतदन्तर्विष्टेन क्षिप्यन्ते शब्दजन्तवः॥
स्वं रूपमर्थं धातूनां व्यवस्थामपि तिङ्विधः।
वक्तुं वैकरणं भेदमयमस्मत्समुद्यमः॥

तत्र तावद्धात्वर्थविशेषद्वारेण लकारोत्पत्तिं प्रति निमित्तभूतः काल इव दिश्यते। स च नित्यत्वाद्व्यापित्वाच्चाकाशकल्पः एकोऽपि यद्यपि कालः, तथापि वर्तमानो भूतो भविष्यन्निति ये व्यपदेशभेदास्ते तस्य क्रियाद्वारकाः। स च कालो मूर्तिमद्भिस्सर्वैरेव संयुक्तः।

* * * *

**Colophon:**

इति हरियोगिनः प्रोलनाचार्य(स्य)कृतौ धातुप्रत्ययपञ्जिकायां शब्विकरणा भूवादयो धातवस्समाप्ताः॥

* * * *

**Colophon:**

इति हरियोगिनः प्रोलनाचार्यस्य कृतौ शाब्दिकाभरणे श्लु(वि)करणा जुहोत्यादयः समाप्ताः॥

**End:**

परिस्कभ्नाति, विष्टभ्नोति, स्कुनाति, स्कुनोति इत्याद्यूह्यम्॥

**Colophon:**

इति हरियोगिनः प्रोलनाचार्यस्य कृतौ शाब्दिकाभरणे धातुप्रत्यय-पञ्जिकायां सौत्रा धातवस्समाप्ताः॥

वाच्य ऊर्णोणुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेड्डुपग्रहात् ॥

अस्यायमर्थः—ऊर्णुञ् (आ)च्छादने इत्यस्य णु स्तवन इत्यनेन तुल्यत्वं वाच्यमित्यर्थः । किं प्रयोजनम्? यङ्प्रसिद्धिः प्रयोजनम् ।

* * * *

श्युकः कितीत्यनेनैकाच इत्यधिकारादुगन्तस्यैकाचः कित्सु इट्प्रतिषेधः क्रियते । स तु नौतेर्यथा भवति नुतवानिति, ऊर्णुतवानित्यत्रापि यथा स्यादित्येवमपि नुवद्भावो वाच्य इत्यर्थः ॥

**Colophon:**

इति हरियोगिना विरचितं शाब्दिकाभरणं सम्पूर्णम् ॥
शब्लुकौ श्लुश्यनौ श्नुश्नमुश्ना स्वार्थणिचस्तथा ।
इति वैकरणा भेदा दश तिङ्प्र(त्य)यान्वयात् ॥

The scribe adds—

रविदासेन रामेण लिखितमिदं पुस्तकं नान्येन न सन्देहः ॥

---

R. No. **4315.**

Paper. 11 × 10 inches. Foll. 294. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Śaṅkara Nambūdirippāḍ, Avanapparampu-mana, Vadakancheri, Cochin State.

Fol. 294 is left blank.

मोक्षधर्मः, दीपिकाव्याख्यासहितः.

MŌKṢADHARMAḤ WITH THE COMMENTARY DĪPIKĀ.

A commentary in Mōkṣadharma which forms a part of the Śāntiparvan of the Mahābhārata: by Nandanācārya.

Breaks off in the 63rd Adhyāya.

**Beginning:**

ऐश्वर्यमद्भुतं यस्य धर्मस्थित्यर्थमेधते ।
अजन्मने नमस्तस्मै वसुदेवात्मजन्मने ॥

वेदान्तसाङ्ख्ययोगाद्याः सरितो यत्र सङ्गताः ।
मोक्षधर्मोदधेस्तस्य व्याख्यानं नावमारभे ॥

श्रीमता भगवता वेदव्यासेन महाभारतमष्टादशपर्वात्मकं प्रणयता द्वादशकं शान्तिपर्व श्लोकानां चतुर्दशभिस्सहस्रैः पञ्चभिश्च शतैः पञ्चविंशत्या च प्रणीतम् । तत्र पूर्वभागे भगवतस्सहस्रांशोरुदगावृत्तिं प्रतिपाल्य शरमये शयने शयानेन शान्तनवेन स्वधर्मं पृच्छते युधिष्ठिराय राजधर्माः प्रथममभिहिताः । राजधर्मश्रवणानन्तरं राजा विदुरपञ्चमैर्भ्रातृभिस्सह पुरुषार्थे मोक्ष एव श्रेष्ठ इति निर्णीय स्वनिर्णयेन भीष्ममतं सङ्गच्छते न वेति ज्ञातुमिच्छन् प्रवक्तुं प्रतिवचनप्रोत्साहनार्थं पृष्टः प्रत्युक्तान् धर्माननुभाषमाणो युधिष्ठिर उवाच—

धर्माः पितामहेनोक्ता राजधर्माश्रिताश्शुभाः ।
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि भारत ॥

पितामहेनेति ।

प्रत्यक्षस्य सतः परोक्षवन्निर्देशः पूजार्थः ।

* * * *

**Colophon :**

इति श्रीनन्द(नाचार्य)विरचितायां मोक्षधर्मदीपिकायां प्रथमोऽध्यायः ॥

**End :**

धर्मं करोमीति करोत्यधर्ममधर्मकामश्च करोति धर्मम् ।
उभे बालः कर्मणी न प्रजानन् सञ्जायते म्रियते वापि देही ॥

धर्मं करोतीत्यधर्मं ब्राह्मण(ण्य)हेतुभूतसत्यवचनादिकं यः करोति । धर्ममग्नीषोमीयहिंसादिकमधर्मकामा हिंसाबुद्ध्या बुद्ध्या तत्र श्रद्धारहितश्च यथा करोति । उभे कर्मणी धर्माधर्मौ न प्रजानन् अजानन् स बालो देही देहात(न्) पुनः पुनः परिगृह्णन् जायते म्रियते च । तस्माद् ज्ञानवता भवितव्यमित्यभिप्रायः ॥

**Colophon :**

इति श्रीनन्दनाचार्यविरचितायां मोक्षधर्मदीपिकायां शुकानुप्रश्ने ज्ञानकर्मसमुच्चयोपदेशो नाम द्विषष्टितमोऽध्यायः ॥

एवं गृहस्थेन मुमुक्षुणा फलमनभिसन्धाय विहितं कर्म कर्तव्यमित्युक्तम् । इदानीं तस्य साङ्ख्ययोगावुपदेक्ष्यन् तच्छ्रद्धायुक्तस्य फलं गावदाह—

अथ चेद्रोचयेदेतदुह्यते मनसा तथा ।
उन्मज्जंश्च निमज्जंश्च ज्ञानवान् प्लववान् भवेत् ॥
ज्ञानप्लववान् भूत्वा मुक्तो भवेदित्यर्थः ।

* * * *

हीनदोषो मुनिर्योगान् युक्तो युञ्जीत द्वादश ।
दशकर्मसुखानर्थानुपायापायनिष्क्रियः ॥
हीनदोषः, हीनयोगदोषः, योगदोषाश्च कामक्रोधादयः । तथा च वक्ष्यति—
योगदोषान् समुच्छिन्द्यात् सश्वयान् कवयो विदुः ।
कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम् ॥ इति ।
मुनिः मननशीलः युक्तः अवहितः द्वादश योगान् युञ्जीत शरीरस्य नवद्वारेषु.

---

R. No. **4316.**

Paper. 11 × $9\frac{7}{8}$ inches. Foll. 110. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. C. Vāsudēva-Sōmayājin, Vilayūr, Malabar district.

Fol. 110 is left blank.

कौषीतकिब्राह्मणव्याख्या—सदर्थविमर्शिनी.
KAUṢĪTAKIBRĀHMAṆAVYĀKHYĀ : SADARTHAVIMARŚINĪ.

Same work as that described under R. Nos. 3650 and 3779 ante.
Breaks off in the seventh Adhyāya.

---

R. No. **4317.**

Paper. $10\frac{3}{4}$ × $9\frac{7}{8}$ inches. Foll. 160. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Nilakaṇṭha Nambūdirippāḍ, Kannur-mana, Othapalam, Malabar district.

ऋग्वेदभाष्यम्.
ṚGVĒDABHĀṢYAM.

A commentary on Ṛgvēda, described under No. 1 of the D.C.S. MSS., Vol. I: by Udgīthācārya of Banavasi.

Contains the Adhyāyas 54—58 complete and 59th incomplete, but wants the beginning of the 54th Adhyāya.

**Beginning:**

मृष्टानां घृतानां नामावयवभूतैः स्वांशलक्षणैस्तस्माद्वयमपि श्रेयोऽर्थ-मग्निमाराधयामः । सप्तस्वसृः सप्तजिह्वाश्वलाख्याः कालीकरालीत्येवमाद्याः स्वसृर्भगिनीभूताः तदग्नेर्जातत्वात्स्वयं सारिणी वा अरुषीरारोचना वावशानो वावश्यमानः अत्यर्थं शब्द्यमानः श्रोतृभिर्हूयमान इत्यर्थः । विद्वान् सर्व-जताग्निर्मध्वो मधुस्वादस्य मृष्टस्य हविषः । पूर्णा इति शेषः । उज्जभा-रोर्ध्वं हरति दृशे दर्शनाय ।

* * * *

**Colophon:**

इति वनवासिविनिर्गताचार्यस्य उद्गीथस्य कृतौ ऋग्वेदभाष्ये चतुष्पञ्चा-शोऽध्यायः समाप्तः ॥

**End:**

हवनादिकां क्रियां विमिमिते निर्मिमीते निवर्तयति । उतोशब्द एवार्थे । एक एव विदितवेदार्थोऽध्वर्युः । एवमत्र ज्ञात्वा कर्तव्यमिति श्रूयते ॥

**Colophon:**

इति श्रीवनवासिविनिर्गताचार्यस्य उद्गीथाचार्यस्य कृतौ ऋग्वेदभाष्ये अष्टपञ्चाशोऽध्यायः समाप्तः ॥

उत्तरं सूक्तं देवानां नु वयमिति नवर्चं देवदेवत्यं दाक्षायणी अदि-तिर्वा बृहस्पतिर्ददर्श ।

देवानां नूपयाजानां प्रवोचाम विपत्य(न्य)या ।
उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे ॥

देवानां सम्बन्धीनि जानानि जन्मानि प्रादुर्भावानि क्षिप्रं प्रवोचाम वयं प्रब्रुवाम ।

* * * *

आ इहि—आगच्छाथ वा त्वं मम तनूः । स्वशरीरमिति योज्यम् । तन्नाव्यापत्तेरयं ते अस्म्युपमेन्नर्वाङित्यादि । अयमहं ते तव.

R. No. **4318.**

Paper. 11 × 9⅞ inches. Foll. 64. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Pandit Sadāśiva Vaidyabhūṣaṇa, Berhampore, Ganjam district.

रसायनतरङ्गिणी.

RASĀYANATARAṄGIṆĪ.

Similar to the work described under R. No. 3776 ante.

Deals with the following subjects :—

१. वज्रादिरत्नमारणम्.
२. रसोत्पत्त्यादिकम्.
३. रसशोधनमारणम्.
४. स्वर्णादिधातुमारणम्.
५. अभ्रकादिरसशोधनमारणम्.
६. गन्धकाद्युपरसशोधनम्.
७. साधारणरसशोधनम्.
८. विषोत्पत्तिशोधनभक्षणे.
९. रसायनयोगः.
१०. रसायनाधिकारीयरसतरङ्गः.
११. घृततैलतरङ्गः.
१२. वाजीकरणाधिकारीयचूर्णतरङ्गः.
१३. पाकविशेषकथनम्.
१७. वाजीकरणीयतैलतरङ्गः.
१८. वाजीकरणीयलेपतरङ्गः.
१९. वीर्यस्तम्भनाधिकारः.

Contains the Taraṅgas 1—13 and 17—19 complete.

**Beginning** :

नत्वा गोविन्दचरणं शरणं सर्वदेहिनाम् ।
क्रियते लोकरक्षार्थै रसायनतरङ्गिणी ॥

रसायनतरङ्गिण्यां तरङ्गाश्चोनविंशतिः ।
सन्ति तेषु प्रथमतो रत्नशोधनमुच्यते ॥

द्वितीये पारदोत्पत्तिस्तृतीये रसमारणम् ।
यथायथं चतुर्थेऽपि धातूनां मारणं ततः ॥

अतः परं पञ्चमेऽपि रसानां शोधनादिकम् ।
षष्ठे चोपरसानां तु शोधनादिकमेव च ॥

साधारणरसानां तु शोधनं सप्तमे तथा ।
अष्टमे च विषोत्पत्तिर्नवमे च तथा पुनः ॥

रसायनाधिकारे च योगो रसायनस्य च ।
अतः परं च दशमे रससङ्गस्य निर्णयः ॥

स्नेहमेकादशे केचित् क्रमाज्ज्ञेयं नरोत्तमैः ।
अथ वृष्याधिकारं च द्वादशे चूर्णमुच्यते ॥
त्रयोदशे मोदकस्तु नव पञ्च रसायनम् ।
रसाः पञ्चदशे चैवं षोडशे च घृतं पुनः ॥
तैलं सप्तदशे चैव लेपश्चाष्टादशे ततः ।
वीर्यस्तम्भादिकं सर्वमूनविंशे क्रमादिति ॥

* * * *

**Colophon:**

इति रसायनतरङ्गिण्यां वज्रादिरत्नमारणो नाम प्रथमस्तरङ्गः ॥

**End:**

पिष्ट्वा मर्दनविधिना पीनं स्तनं कठिनं कुरुते ।
अलम्बुषा(सा)बलाकल्कैस्सिद्धं तैलं करोति वनिता या ॥
पिचुधरणनस्यदानात्कुचद्वयं श्रीफलाकारम् ।
श्रीपर्णीरसकल्काभ्यां युतं तैलं विपाचयेत् ॥
तत्तैलं चुलकेनैव स्तनस्योपरि धारयेत् ।
पतितावुत्थितौ स्त्रीणां भवेयातां पयोधरौ ॥

**Colophon:**

इति रसायनतरङ्गिण्यां वीर्यस्तम्भनाधिकारः ऊनविंशस्तरङ्गः ॥

---

## R. No. 4319.

Paper. 10¾ × 9⅝ inches. Foll. 36. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Mugalil Kutti Anujan Tamburān, Chalapuram, Calicut.

लक्ष्मीमानवेदम् .

LAKṢMĪMĀNAVĒDAM.

A drama narrating the story of the marriage of Rājalakṣmī with Mānavēdarāja of Trivandrum: by Divākara, son of Udbāhusundara.

Breaks off in the course of the fifth Act.

**Beginning:**

यद्द्वारन्तरसीम्नि मङ्गलमयं तत्सान्निधत्ते महो
यत्नाभीकुहरोदरेण विपुलो विश्वद्रुमोऽङ्कुरवान् ।

यन्नेत्रद्वितयप्रभैव तनुते नक्तन्दिवप्रक्रियां
निद्राणा वितनोतु शर्म भवतां सा जागरूका दया ॥

अपि च—

क्वचित्पदनमन्महि क्वचन मन्दपादक्रमं
क्वचित्स्फुटजटाभ्रमि क्वचन कम्पमानालकम् ।
क्वचित्सफणिफूत्कृति क्वचन कङ्कणक्वाणवत्
करोतु शिवयोश्शुभं नटनकर्म तत्तादृशम् ॥

नान्द्यन्ते (सूत्रधारः) सू—रङ्गपूजां तावत्साधयामि । परिक्रम्य.

जय जय जगद्विमोहिनि जय जय भरतकुल भागधेयनिधे ।
जय जय रङ्गनिवासिनि जय जय रसभावपरिणते देवि ॥

* * * *

सू—आर्ये ! सम्प्रत्यादिष्टोऽस्मि सकलराजन्यमकुटतटघटितमाणिक्यमयूखमञ्जरीनीराजितचरणयुगलस्य

* * * *

शैलार्णवचक्रवर्तिनश्चरणायुधक्रोडपुरीपुरन्द(र)स्य मानविक्रमस्यानुजन्मनो नीलापगापुरीमहाराजस्य मानवेदस्य चरणोपजीविना मन्त्रिमण्डलेन ।

* * * *

भयावनतसमस्तपरिपन्थिसामन्तमण्डलस्यास्मत्स्वामिनो राजाधिराजपरमेश्वरस्य मानवेदस्य चरितानुबन्धि किमपि रूपकमनेनैव सविशेषया भक्त्या

* * * *

अभिनवशृङ्गारभङ्गितरङ्गितमभिनेतव्यं भवतेति । अस्ति चैषां सचेतसामनर्गलं देवस्य मानवेदस्य चरितदर्शने कौतूहलम् ।

* * * *

ब्राह्मणानामतिशयेन प्रशंसनीयोद्दाहुसुन्दरस्याङ्गभूरामुष्यायणः विश्वविख्यातकीर्तिर्महाव्रतमखविभावितसकलसुमनस्स्तोमः सुगृहीतनामा विजयते कविर्दिवाकरो नाम । तेन च धीरोदात्तस्य मानवेदस्य महीपतेश्चरितमुपादाय

अचुम्बितमवद्यतो गुणविराजिवक्रोक्तिम-
त्करम्बितरसोदरं कलितचारुभूषाशतम् ।
कलत्रमिव मोहनं रसिकचेतसां रीतिभिः
कृतं किमपि नाटकं भरतनाट्यनाडिन्धमम् ॥

यस्य लक्ष्मीमानवेदमिति नाम । तदेव प्रयुञ्जानाः परिषदमाराधयामः ।

* * * *

**Colophon :**

प्रथमोऽङ्कः समाप्तः ॥

**End :**

भद्रे कस्य पुनरेनां दातुं पितुर्हि सङ्कल्पः । भो वयस्य धीरो भव । आर्ये! कस्याप्यासन्नवर्तिनः क्षत्रियस्य दातुं पितास्या अभिलषति । सखे ! न श्रुतम् ? कन्यकाः—भार्गवो युष्मानाकारयति । आर्ये गच्छामः । आर्य ! आवामपि गच्छावः ॥

**Colophon :**

तृतीयोऽङ्कः ॥

भो वयस्य कदापि गुडमरीचजीरकामिश्रं मोदकं विस्मरितुं न पारयामि । भो वयस्य तयोपभुक्तमुक्तानि किसलयशयनानि पश्य । किं तत्रभवत्यास्स्निग्धो जनः अलीकं मन्त्रयति ? । भो वयस्य दिष्ट्या चिरेण कृतार्थोऽसि । यावन्निवेशमवगच्छावः ॥

**Colophon :**

चतुर्थोऽङ्कः ॥

अहो भगवता दिष्ट्या पूरितः खलु समुद्रराजस्य मनोरथः । यदि- दानीं राज्यलक्ष्मीं राजर्षेर्मानवेदस्य प्रतिपादयितुं समुद्रराजो नि(नी)लानद्या सममाहूतः ।

* * * *

आर्य गच्छामः । भो वयस्य नितम्बस्पृशा चरणयुगलेन धाव । इत इतो भवान् । भो वयस्य पश्य पश्य भगवता प्रभावनिर्मितं मण्डपम् । भो वयस्य.

R. No. **4320.**

**Paper.** 11 × 10 inches. Foll. 14. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Srīkumāra Nambūdirippāḍ, Kottamadam-mana, Andathode post, Malabar district.

स्तोत्ररत्नसोदरम्.

STŌTRARATNASŌDARAM.

A collection of eulogies addressed to Rāma, Gaṇapati, Mahākāla, etc. : by Kṛṣṇalīlāśuka.

| Foll. | | Foll. | |
|---|---|---|---|
| 1 | रामचन्द्राष्टकम्. | 7b— 8a | कार्कोटकेश्वरस्तोत्रम्. |
| 1b – 2a | अनुभवाष्टकम्. | 8a— 9a | श्रीकृष्णवरदाष्टकम्. |
| 2a—5b | गणपतिस्तोत्रम्. | 9a—13a | बृन्दावनस्तोत्रम्. |
| 5b—7a | महाकालाष्टकम्. | | |

Foll. 13b –14b are left blank.

Complete ; but wants the beginning of रामचन्द्राष्टक.

**Beginning:**

येन नान्दीमुखं नीतान्यागामिन्या रणश्रियः ॥
जानकीस्तनकुम्भाभ्यां लक्षितं लक्ष्मणेन च ।
जागरूकं जगत्त्राणे महस्तज्जाये जायताम् ।
वन्दामहे च(व)यं वीर्यं रावणद्वेषिणः प्रभोः ॥

*   *   *   *

कृष्णकेलिशुकभक्तिकन्दलिं पुष्णकी(ती) भुवनभाक्तिभूमिषु ।
कृष्णजां रघुकुलेन्दुसौरभे मुष्णती हृदयमेक . श्रुतेः ॥

**Colophon:**

इति श्रीकृष्णलीलाशुकमुनिविरचितं स्तोत्ररत्नसोदरं श्रीरामचन्द्राष्टकं समाप्तम् ॥

**End:**

बृन्दावनव्यसनिनस्तव देव कृष्ण-
लीलाशुकेन रचितं निचितं रसौघैः ।
प्रत्यक्षरं परिदुहन् मधु कर्णयोस्ते
स्तोत्रं तदेतदनिशं विलिहन्तु धन्याः ॥

**Colophon:**

इति श्रीकृष्णलीलाशुकमहाकविमुनिविरचितं षष्टिसङ्ख्यं स्तोत्ररत्नसोदरं नाम बृन्दावनस्तोत्रं समाप्तम् ॥

---

R. No. **4321.**

Pape . 11 × 10 inches. Foll. 64. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Ittiri Vāriyar, Karakkattu desam, Kavalapara post, Malabar district.

Foll. 63*b*—64*b* are left blank.

शौरिचरितम् , सव्याख्यानम्.

ŚAURICARITAM WITH COMMENTARY.

A poem in Prākṛta language describing the story of Lord Kṛṣṇa : by Śrīkaṇṭha.

The work is followed by a commentary in Sanskrit.

Breaks off in the fourth Āśvāsa.

**Beginning :**

गुरुं गणपतिं वाणीं ब्रह्माणं विष्णुमीश्वरम् ।
नमस्करामि लक्ष्मीं च पार्वतीं च मुहुर्मुहुः ॥
श्रीकण्ठचरितं काव्यं तच्छौरिचरिताह्वयम् ।
व्याख्यास्ये(ऽहं) सयमकं प्रौढप्राकृतभाषयोः ॥

मू—

णमह गआणणपाअं जत्तो विमुहा जणा गया ण ण पाअम् ।
जंणइरत्ता लेहा सळाहणिज्जाअ जत्थ रत्ता लेहा ॥

छा—

नमत गजाननपादं यस्माद्विमुखा जना गता न न पातम् ।
यन्नतिरक्ता लेखाः श्लाघनीयाश्च यत्रास्मिन् रक्ता लेखाः ॥

गजाननपादं नमत । यस्मात् पादात् विमुखा जनाः पातं विनिपातं न न गता गता एव, व्यतिरेकोक्त्यान्वयदार्ढ्यमुक्तम् । श्रेयःप्राप्त्यै अहमेक एव न तत्प्रणामरागीत्याह—यन्नत्यनुरक्ता आस्तिका लेखा देवाः किं पुनरन्य इति भावः ।

* * * *

सुणह महाणंदमयं सोरिचरित्तं खु वरमहाणं दमअम् ।
(किं)विसमं(सामं)तंष्ट्र सुइरो वि अविस समं सामन्तम् ॥

सोरिचरित्तं शौरेश्चरित्रं सुणह शृणु तत्प्रातिपादकत्वेन शौरिचरित-संज्ञं काव्यमिति च विवक्षितमेव शेषमुभयत्र योज्यम् ।

* * * *

**Colophon:**

इ अ सोरि चरिए(प)डडमो आसासोरु (इति शौरिचरित्रे) (प्रथम आश्वासः) ॥

**End:**

नगराण्यचरम् । अनेन प्रवर्षणाख्यपर्वतगमनमपि रिपुजनजय इति भावः ॥

**Colophon:**

इअ सोरिसरित्ते तृतीय आसासो ॥
इति शौरिचरित्रे तृतीय आश्वासः ॥

अह अ विवाहो विहिओ रुग्विरुआ रुग्विणीविवाहो विहिओ ।
हरिणा परिणअवसणं ददु(म)घोअसुअञ्स आसि परिणअवसणम् ॥

अथ च विबाधः अविहितस्सबाधः रुग्विरुआ रुक्मिणो रुजा वेदना रुग्विणीविवाहो रुक्मिणीविवाहः । द्विरुक्तवकारः । विहिओ विहितः । हरिणा व(प)रिणअवसणं परिणये यत् वसणं तत्पारिणअवसणं परिणतं व्यसनं दमघोषसुतस्य आसि आसीत् ।

* * * *

पत्थसूओ रहे अत्थसंदा(भा)रअं दा(भा)रअं संवहार गओ तारिसम् ।
भारअं जत्थ सूराणहिं साहसं भारअं हारिशो आसि धत्ती विसम् ॥

पत्थसूओ पार्थसूतः रहे रथे अत्थसंभारअं अस्त्रसम्भारगं संवहारं सम्प्रहारं गओ गतः । तारिसं तादृशं भारअं भारतं भरतसम्बन्धिनं जत्थ यत्र सु(सू)राण शूराणां हिं विण(ष)ये साहसं साहसकर्म भारअं भासितं शोभावहमित्यर्थः । हारिरो हारयिता आसि आसीत् । धत्तीविसं धात्र्या भूम्या विषं विषवद्दुस्सहमित्यर्थः ।

भारअं दुट्टं भारम् ·

## R. No. 4322.

Paper. 11 × 10 inches. Foll. 88. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Vāsudēva-Sōmayājin, Vilayūr, Malabar district.

### (a) कर्मान्तसूत्रम्.

### KARMĀNTASŪTRAM.

Foll. 1*a*—32*a*.

Same work as that described under R. No. 3229 ante, wherein see for the beginning.

Contains the second and third Praśnas complete.

**End:**

अथ दर्शपूर्णमासेषु निसृष्टायामवान्तरदीक्षायां पिण्डपितृयज्ञं दद्यात् । तदिदं प्रोक्तं यदु क्षुप्तं सूत्रतः सोमैकं त्वेव क्रतुयोगं यज्ञे यज्ञमुपलक्षयेतेति बौधायनः ॥

**Colophon:**

इति कर्मान्ततृतीयः प्रश्नस्समाप्तः ॥

---

### (b) द्वैधसूत्रम्.

### DVAIDHASŪTRAM.

Foll. 32*a*—88*b*.

Deals with the directions for the performances of various kinds of Vedic rites, and is attributed to Bōdhāyana.

Contains the Praśnas 1—4 complete.

**Beginning:**

उपवसथ इति कथमु खलु उपवसथं जानीयात् सन्ध्य(ा)स्विदेवोपपाद्योऽथो पूरणादशिति सा वु खलु सन्ध्यस्साधुसन्धेरुपपादनं न तु खलु सन्ध्य(ा)सूपपादय इव सर्वेषां चैव सन्ध्यस्स(न्ध्यास्वा)ह स्माह बोधायनो यत्रैतदुपसदोऽस्तमित आदित्ये पुरस्ताच्चन्द्रमा लोहितीभवन्निवोदियात् । तमप्युपवसथं जानीयादित्यत्राह स्माह शालीकिः ।

* * * *

धेनुं वानड्वाहं वा दद्यादिति बोधायनोऽन्यद्वै कथनमिति शालीकिरन्यद्व कथनमिति शालीकिः ॥

दशमः ॥

**Colophon:**

प्रथमदशिका समाप्ता ॥

**End:**

सोमचमसं ददाति हिरण्मयं चमसं ददाति राशीकृतं धान्यं ददाति मरायकृतं धान्यं ददाति—इत्येतानि च नित्यानि च दद्यादिति बोधायनः। एता[म]न्य(न्ये)वेति शालीकिरेतान्येवेति शालीकिः ॥

इति दशमः ॥

**Colophon:**

इति चतुर्थदशिका समाप्ता ॥

नित्यानि च ॥

द्वैधं समाप्तम् ॥

इति कल्पा(र्मा?)न्तसूत्रं समाप्तम् ॥

---

R. No. **4323.**

Paper. 11 × 10 inches. Foll. 212. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Sundaram Nambūdirippāḍ, Kalalai-mana, Kottapadi post, Malabar district.

## सुभद्राहरणम्, सविवरणम्.

## SUBHADRĀHARAṆAM WITH COMMENTARY.

Foll. 211—212*b* are left blank.

Same work as that described under R. No. 2720 ante. By Nārāyaṇa, son of Brahmadatta of Kūṭalur-mana. It is stated that the author Nārāyaṇa had two paternal uncles called Rāma and Udaya, by whom he was educated.

Contains the Sargas 1—5 and 9—16 complete.

The MS. described under R. No. 2720 and the MS. described in this number make one complete copy of this work.

**Beginning:**

प्रारिप्सितस्य काव्यस्याविघ्नपरिसमाप्तये प्रथनाय च गणपतिमभिवन्दते—

मधुव्रताकारमुनीन्द्रवृन्दप्रपीतदानार्थरसप्रवाहम्।
अनन्तमध्यादिपरं महस्तमृहस्तिरूपं शरणं प्रपद्ये ॥

परम्---उत्कृष्टमादित्यादीनामपि भासकं महः तेजः ब्रह्म शरणं प्रपद्ये रक्षितृत्वेनाश्रये ।

*    *    *    *

एवमिष्टदेवतां नमस्कृत्य कवित्रर्णनं च कृत्वा क्रियमाणं व(स्तु) निर्दिशति---

सुदुस्तरं व्याकरणाम्बुराशिं मनस्तरित्रेण विगाह्य लब्धैः ।
सुशब्दरत्नै रचयामि हारं काव्यं सुभद्राहरणाभिधानम् ॥

सुशब्दरत्नैः साधुशब्दै रत्नैरिव सुभद्राहरणा[भिधाना]ख्यं हारमिव हारं मनोहरं रचयामि । कीदृशैः(शं) सुदुस्तरमत्यन्तदुस्तरम ; स्वती पूजाया-मिति समासः ।

*    *    *    *

कः पुनरसौ कविः ? य इदं काव्यं करोतीत्यत्राह---

नीलोपकण्ठाभरणाद्विनीताद्यो ब्रह्मदत्तादजनि द्विजेन्द्रात् ।
रामोदयाचार्यपितृव्यचुञ्चुर्नारायणोऽसौ कविरस्य कर्ता ॥

नीला नाम दक्षिणापथभूषणा महानदी तस्यो(स्या उ)पकण्ठस्य समीपस्य कण्ठसमीपस्येवाभरणभूतात् गुणालम्बिनो विनीताच्छात्रानुगता-चारात । ब्रह्मदत्ताभिधानाद् द्विजेन्द्राद्योऽजनि प्रादुरभूत् ; लुङस्तशब्दे दीप-जनेति कर्तरि वा चिण् ; चिणो लुक् । असौ नारायणाख्यः कविरस्य काव्यस्य कर्ता । रामोदयाभ्यामाचारा(र्या)भ्यां ताभ्यामेव पितृ(व्या)भ्यां वित्तः ; तेन वित्तश्चुञ्चुप्चणपौ, पितृव्यमातुलमातामहपितामहा इति पितुर्भ्रा-तरि पितृव्यशब्दो निपातितः ।

एवं सहृदयानावर्ज्येदानीं काव्यमारभते---

बभूव भूमेरखिलावदातं विभूषणं वारिधिमेखलायाः ।
धर्मान्तरं भूतिदमाश्रितानां युधिष्ठिरो नाम नरेन्द्ररत्नम् ॥

रत्नमिव नरेन्द्रो बभूव । रत्नं कस्यचिद्भूषणं भवति । इदं तु राजरत्नं कस्य भूषणमित्यत्राह---भूमेर्विभूषणं वारिधिमेखलाया रत्नाकरेणाभरणान्तरेणापि काञ्चीगुणेनेव प्रसाधितायाः युवतेरिव ।

*    *    *    *

**Colophon :**

इति ब्रह्मदत्तनारायणविरचिते व्याकरणोदाहरणे स्सि(स)विवरणे सुभद्राहरणे प्रकीर्णकाण्डं प्रथमस्सर्गः ॥

**End :**

उत्क्रोशन्मणिकुण्डलावलिकरा गण्डस्खलत्कुण्डला
कौशेयोत्कलिका चलस्तनभरा वाहाननुदन्ती शनैः ।
बद्धेर्ष्याप्रमदाद्बलाच्युतगदान् भ्रातॄन् सुभद्रा युधे
सन्नद्धान् भगिनीं च तेऽपि ददृशुर्भग्नभ्रुभिर्लोचनैः ॥

इह द्विविधं पदजातम्—सुबन्तं तिङन्तं च । अव्ययोपसर्गकर्मप्रवचनीयास्तु द्वैविध्यदर्शने सुबन्तेऽन्तर्भवति(न्ति) । तत्रेह काव्ये तृतीयाद्यष्टसर्गी सुबन्तप्रधाना । एकादशादिषट्सर्गी तिङन्तप्रधाना । प्रकीर्णकाण्डं प्रथमं प्रसन्नकाण्डं च पश्चिममुभयसाधारणं सनाद्यन्तप्रकरणमप्युभयसाधारणम्; सनाद्यन्तधातुभ्यः कृल्लकारोत्पत्तेः कृदन्तानां प्रातिपदिकत्वाल्लकाराणां च तिङ्विधानादिति षोडशसर्गीयम् ॥

(अर्था द्वादशसर्गाणां) काव्यस्य विवृता मया ।
उत्तरां तु चतुस्सर्गीं व्याचक्षीरन् विचक्षणाः ॥

इदं काव्यं कृत्वा विवृतिमपि कर्तुः कृतधियो
मम स्याद्युष्माकं सदसि कथमाहोपुरुषिका ।
तदेतं भारं वश्शिरसि निदधे वर्धयत त-
द्गुणानत्राशेषानपनयत दोषांश्च (दयया) ॥

**Colophon :**

इति सुभद्राहरणे सविवरणे षोडशस्सर्गः ॥

---

R. No. **4324.**

Paper. 10¾ × 9¾ inches. Fol. 88. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Nārāyaṇa alias Kṛṣṇa Nambūdiri Vaidikan, Tekkattu-mana, Kumaranallur post, Malabar district.

Foll. 86b—88b are left blank.

श्रौतप्रायश्चित्तम्.

ŚRAUTAPRĀYAŚCITTAM.

A treatise on the performance of expiatory ceremonies in connexion with sacrificial rites.

Incomplete.

**Beginning:**

बोधायनं जैमिनिमाश्वलायन . . . . . . पराधनिष्कृतिं ज्ञातुं करिष्याम्यृजु च . . . . . रितं खलु विनष्टस्यैव सन्धानमि . . . . व्याकरणस्यान्य . . . वैधकरणाद्वैकल्यमा . . . . . . न नश्यति ततस्साकल्यमस्या(वस्था)प्यते ।

* * * *

प्रायश्चित्तं कृत्वा . . . . प्यापन्नसमाहित . . . . . . . प्रायश्चित्तं क्वचित्कुर्यात् ।

* * * *

अङ्गं स्याद्यदनर्थलुप्तमथ तत्काले निजे विस्मृतं
ज्ञातं प्राक्तु समाप्तितो यदि चरेदेतत्तथैवाथ तु ।
विज्ञातं च समाप्तितो यदि परं तद्विस्मृतं नाचरे
दावर्त्यं न च कर्म सर्वविषये चित्तं चरेद्व्याहृतिः ॥
उव(प)सत्स्वतीतमङ्गं नावर्त्यमिह त्वनर्थलुप्तमपि ।
त्वरमाणादिकवाक्यादन्यत्र च वचनसम्भवेऽप्येवम् ॥

**End:**

सम्राडसि विराडसि भूरायुर्मे धारयत प्राणं मे धारयत प्रजां मे धारयत पशून्मे धारयत प्राणः प्रजा· पशवः परासिच्येरन् मा म आयुः प्राणः परासिच्येरन् प्रजाः पशवः परासिच्येरन् ।

भूमिर्भूमिमगान्माता मातरमप्यगात् ।
भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् ।

---

R. No. **4325.**

Paper. 10⅜ × 9⅝ inches. Foll. 122. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Nārāyaṇa Nambūdirippāḍ, Pūmalli-mana, Chalasseri post, Malabar district.

Foll. 121*b*—122*b* are left blank.

नारदधर्मशास्त्रम्, सव्याख्यानम्
NĀRADADHARMAŚĀSTRAM WITH COMMENTARY.

A treatise on Dharmaśastra attributed to Nārada; the work is followed by a commentary.

Contains the Vyavahāra portion complete

**Beginning**:

मनुः प्रजापतिर्यस्मिन् काले राज्यमबूभुजन् ।
धर्मैकतानाः पुरुषास्तदासन् सत्यवादिनः ॥

सर्वो धर्मो वर्णाश्रमान्तरजानां स्मृतः । तस्य धर्मस्यार्थाधीनत्वात्कथं नाम निश्श्रेयसाभ्युदयाभ्यां पुरुषास्संयुज्यन्तामिति भगवता नारदेन शास्त्रं प्रणीतमिति सम्बन्धः । मनुः प्रजापतिरिति निगदव्याख्यानो ग्रन्थः । धर्मैकनाना धर्मैकविस्ताराः धर्मैकव्यापाराः । अस्यैवानुवादस्सत्यवादिन इति । तदासन् पुरुषा इति स्त्रीपुंसां ग्रहणं पुमान् स्त्रियेत्येकशेषः । तदा व्यवहार-हेतुमत्सरगाद्यभावात अधर्माभावान्नासीद्व्यवहारः ।

नष्टे धर्मे मनुष्येषु व्यवहारः प्रकल्पितः ।
द्रष्टा च व्यवहाराणां राजा दण्डधरः कृतः ॥

*   *   *   *

लिखितं साक्षिणश्चात्र द्वौ विधी सम्प्रवर्तितौ ।
सन्दिग्धार्थविशुद्ध्यर्थं द्वयोर्विवदमानयोः ॥

*   *   *   *

**Colophon:**

ऋणादानं विवादपदं प्रथमम् ॥

**End:**

यथोक्तेन विधानेन पञ्चदिव्यानि धर्मवित् ।
ददद्राजा दिशस्तेभ्यः प्रेत्य चेह च नन(न्द)ति ॥

गतार्थः श्लोकः । पञ्चदिव्यानि ॥

**Colophon:**

समाप्तमिदं शास्त्रं भगवत्स्वामिना कृतम् ।
नारदीयाया मनुसंहिताया भाष्यम् ॥

## R No. 4326.

Paper. 10¾ × 9⅝ inches. Foll. 60. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Śrīkumaran Nambūdirippād, Kattumada-mana, Andathode, Malabar district.

**बृहतीव्याख्या — ऋजुविमलापञ्जिका.**

BṚHATĪVYAKHYĀ : ṚJUVIMALAPAÑJIKA.

Same work as that described under R No. 2682 ante. By Śālikanāthōpādhyāya.

Contains the first two Padas complete and the third Pada incomplete in the III Adhyaya

---

## R. No. 4327.

Paper. 10¾ × 9⅝ inches. Foll. 226. Lines, 23 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of the Sanskrit College Library, Tiruppanattura, Cochin State.

Fol. 226 is left blank.

**अष्टाङ्गहृदयव्याख्या – हृदयबोधिका.**

AṢṬĀṄGAHṚDAYAVYĀKHYA : HṚDAYABODHIKA.

Same work as that described under R. No. 2898 ante, wherein see for the beginning. By Śrīdasapaṇḍita.

Contains the Śarīra, Nidāna and Kalpa portions complete.

**End :**

उपसंहरन्नाह—हिमवादित्यादि । वसुन्धरा भूमिः हिमवत्पर्वतेन विन्ध्य शैलेन च प्रायो व्याप्ता । दक्षिणो भागः विन्ध्यः, उत्तरो हिमवान् । तत्रैवं स्थिते, आदौ भवमाद्यं हैमवतमौषधं सौम्यं देहे च पथ्यं स्वभावाद्भवति । वैध्य(न्ध्य)मौषधमाग्नेयं न तथा देहस्य सदा पथ्यं स्यात् । अनेन हैमवतमेव रसायनादीनां प्रयोगे ग्राह्यमिति सूचयति । वैध्य(न्ध्य)स्य पथ्यापथ्यत्वेनानुक्ते विषयविशेषेण पथ्यत्वमुक्तमितीन्दुः । तत्र तयोर्मध्ये आद्यं हैमवतमित्यरुणदत्तः ॥

**Colophon :**

इति कल्पे षष्ठोऽध्यायः ॥

R. No. **4328.**

Paper. 10¾ × 9½ inches. Foll. 76. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Śrīkumāran Nambūdirippāḍ, Kattumada-mana, Audathode post, Malabar district.

Fol. 76 is left blank.

## अमोघराघवम्.

## AMŌGHARĀGHAVAM.

A Campū describing the story of the Bālakāṇḍa of the Rāmāyaṇa: by Divākara, son of Viśvēśvara and grandson of Nārāyaṇa. It is stated that the author had an elder brother called Viṣṇu. This work was composed in the Śaka year 1221.

Complete in seven Ucchvāsas.

**Beginning:**

इन्दुं यः शिरसेन्द्रमौलिविलसत्पादारविन्दो द(धा)-
वै(त्यै)श्वर्यं विमलद्विजेशभरणोद्गास . . त श . ।
. . . . . . . . . . नयप्रेक्षीव गौरीं दध-
च्छ्रेयः प्रापयतात्स नः त्रिभुवनक्षेमङ्करश्शाङ्करः ॥

मयि वामदक्षिणोऽर्घावीद्दग्वृत्ति(त्ती) सदेति वक्तुमिव ।
दशनौ खण्डाखण्डौ दधतं वेतण्डतुण्डमभिवन्दे ॥

* * * *

वाणी वासमवाप यस्य वदनद्वारि प्रतीक्ष्येव हृ-
त्पद्मस्थाम्बुजनाभनाभिनिवसल्लोकेशसेवाक्षणम् ।
वल्मीकप्रभवाय कल्मषभिदे तस्मै परस्मै नमो
रामोदात्तचरित्रवर्णनवचःप्रोद्योगिने योगिने ॥

रम्याश्लेषवती प्रसादमधुरा शृङ्गारसङ्गोज्ज्वला
चाटूक्तैरखिलप्रियैरहरहस्संमोहयन्ती मनः ।
लीलान्यस्तपदप्रचाररचना सद्वर्णसंशोभिता
भाति श्रीमति कालिदासकविता कान्तेव तान्ते रता ॥

सद्भावोचितकर्मकर्तृकरणापादानसम्बोधिनी नामा-
ख्यातनदी(पदा)गतिमती लब्ध्वा(ब्धा)गमप्रत्यया ।

साम्यं प्राप सदङ्गवृद्धिगुणभृद्यस्याकृतिर्व्याकृतेः
विश्वेशो विनतस्य मे स कुरुतां दोषप्रमोषं गिराम् ॥
जातं पाणिनिसागराद्वररुचौ शाणे समुत्तेजितं
शेषेणाखिलसूत्रसौष्ठवविदा सन्दानितं सद्गुणे ।
नूनं व्याकृतिरत्नमात्रहृदयन्यासेन सत्काशिका-
वृत्तिं वि(ष्णु)दया दिवाकरहृदि प्रत्यास विश्वेश्वरः ॥

* * * *

रघुपतिचरितं रसने! परिचितमपहाय मा गमः क्वापि ।
कः पल्वलमन्विष्येत् सुकृतैरभिसरति सुरस(रि)त्पूरे ॥

* * * *

तत्राधःकृतभोगिभोगमहिमा निर्वाणभावोचित-
स्थानं मानससम्पदामपि दशोत्पत्तिक्रियाविक्रियम् ।
जज्ञे यज्ञचयप्रियः कलिमिलत्कल्माषकर्मोन्नमत्-
पापाम्भो[म्भो]नि(धि)मध्यलग्नसुकृतेर्धाराय नारायणः ॥
द्विजेन्द्रशेखरस्तस्य सुतो विश्वेश्वरोऽभवत् ।
यः पिधातुमिवात्मानं मुदामकृत दूरगाम् ॥
यस्साकं धर्मपत्न्यापरवयसि परित्यक्तसांसारिकाशीः
काशीमासाद्य सद्यस्सुरसरिदमृते सङ्गशय्यार्पिताङ्गः ।
पायं पायं पुरस्ताच्छिववदनगलत्तारकब्रह्मविद्या-
पीयूषं कर्णपेयं निरुपमसुखदं प्राप कैवल्यलक्ष्मीम् ॥
तस्यात्मजो विष्णुरलङ्करिष्णुः कुलं पवित्रैरमलं चरित्रैः ।
भूतेशसेवासुखमाप्तुकामः श्रौतो विधिर्मूर्त इवाविरासीत् ॥
तत्राग्रजे गुणश्रेणीं कृत्वेव गुणलोभिना ।
दिवाकरः कृतो धात्रा तत्सौदर्यैकभूषणः ॥
सुदुष्करां कर्तुमहं प्रवृत्तस्सदास्मि चम्पूमनुकम्पनीयः ।
पयोधिपारोत्तरणाय ताम्यन् किमन्तरन्येन नरो न तार्यः ॥

* * * *

अस्ति प्रशस्तवस्तुविस्तृतान्तरालः सविधगतविविधनगनगरपुरविहाराराम-सरसीसरित्सन्निवेश' शालेयनिल्यमौ(द्रीन)कौद्रवीणाणव्ययव्ययव(वं)त्यादिकेदा-रिकक्रियैकतानकृषीवलकुलसङ्कुपितपल्लिपरिकरः

* * * *

अनुत्तरोऽप्युत्तरकोसलाभिधानो जनपदः ।

* * * *

तमुत्थाप्य क्षिप्रं क्षणमनिभृतः सम्भ्रमवृतः
परास्यैतत्तापत्रयमुद(दित)या दृष्टिसुधया ।
सपर्यासन्तुष्टो वरमिव परामाशिषमदा-
दमोघश्रीबीजं भुवनविभवे राघवभुवे ॥

**Colophon:**

इति श्रीमत्यमोघराघवे महाकाव्ये कौशिकागमनाभिलक्षितः प्रथमोच्छ्वासः ॥

**End:**

इति भृतरससारैर्गद्यपद्यैरुदारैः कवितुरवितुरस्य श्राव्यमाकर्ण्य काव्यम् ।
भृगुपतिविजयश्रीचिह्नमह्नाय तुष्यन्नभिलषितममुष्यामोघयन् राघवेन्दुः ॥

**Colophon:**

इति श्रीमत्यमोघराघवे अमोघराघवाङ्कवति श्रीदिवाकरकृता चम्पुकाव्ये पुरप्रवेशकथनं नाम सप्तमोच्छ्वासः ॥

* * * *

चन्द्रनेत्रद्वयक्षा(क्ष्मा)भिः(१२२१)शककाले विलोकिते ।
अमोघराघवं काव्यमाविरासीद्दिवाकरात् ॥

The scribe adds--

निखिलनिगमवल्लीपुष्पभृङ्गायमाना(णा)
व्यलिखदिदमुदारं पुस्तकं विश्वनाथः ।
रघुपतिचरिताढ्यं ध्यानसीमाप्तवाणी-
विलसितहृदयान्तस्स्वैरच(स)श्चारिवाचः ॥
पुरनेत्राग्निचन्द्रा(१३२३)ङ्कशकाने(ब्दे) खरवत्सरे ।
सितं(ते) नभस्यष्टमीन्दु(न्दौ) विश्वनाथेन लिख्यते ॥

## R. No. 4329.

Paper. 10¾ × 9⅝ inches. Foll. 48. Lines, 20 in a page. Dēvanāgarī Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Ittiri Vāriyar, Karakkattu desam, Kavalapara post, Malabar district.

Fol. 48 is left blank.

### वृत्तिरत्नम्.

### VṚTTIRATNAM.

Similar to the work described under R. No. 4200 ante Contains the Pādas 1 and 2 in the III Adhyāya.

**Beginning:**

गणपतिरिति चत्वारो जयन्ति वर्णा महीयांसः ।
पङ्क्तिरथस्येव सुताः प्रणतजनाभीष्टदाननिपुणतराः ॥

प्रत्ययः, परश्च, आद्युदात्तश्च, अनुदात्तौ सुप्पितौ ।

अध्यायाभ्य मिहाद्याभ्यामन्वाख्यानोपकारकाः ।
संज्ञातिदेशनियमविकाराद्या निरूपिताः ॥
अस्मिन्नारभ्यतेऽध्याये साक्षाच्छब्दानुशासनम् ।
प्रकृत्यादिविभागेन कल्पनं ह्यनुशासनम् ॥
तत्रादौ विनियुज्यन्ते संज्ञादेशस्वराः क्रमात् ।
सनादीनामिहापञ्चमाध्यायावसितेस्तः ॥
तत्र प्रत्यय इत्येषा संज्ञाधिक्रियतेऽमुना ।
प्रत्येत्यर्थमितीदृश्या व्युत्पत्त्या प्रत्ययः स्मृतः ॥

* * * *

संज्ञादेशस्वराणां स्मरणमथ सनाद्यन्तधातूपदेशः
पश्चात्स्याद्यामशप्श्यन्प्रभृतिविकरणप्रत्ययादिस्मृतिश्च ।
भूयः कृत्योपदेशो निरुपपदकृतां शासनं वृत्तिरत्ने
प्रायादित्थं तृतीये प्रथममिह पदं प्रत्ययाख्यं सनाम ॥

अथ द्वितीयः पादः—

कर्मण्यण्.

**End:**

स(सु)प्तश्च शयितश्शोभावासितो लुप्त इत्यपि ।
वर्तमान(ने)स्मृताः काले शब्दा एकेऽपि सूरिभिः ॥
पञ्चमवसितमेतद्यत्तृतीये द्वितीयं
विगलितवचनीयं व्यक्तवाणीगुणाढ्यम् ।
स्फुरदुपपदकृत्स्मृत्य(द्यत्कृत्य)ताच्छीलिकान्तं
चतुररुचिरवृत्तं वृत्तिरत्नो(त्नं) विधात्रा ॥

**Colophon:**

वृत्तिरत्नं समाप्तम् ॥

---

R. No. **4330.**

Paper. 10¾ × 9⅝ inches. Foll. 294. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Mīnākṣisundara Śāstrigaḷ, Gōpālakṛṣṇa street, Madura district.

Bound in two volumes

Fol. 294 is left blank.

**विद्यावृत्तिप्रकरणम्, सव्याख्यानम्.**

VIDYĀVṚTTIPRAKARAṆAM WITH COMMENTARY.

A treatise on Saivism dealing with the following Prakaraṇas:—

१. अपरविद्यादीपिकाप्रकरणम्.
२. दहरविद्यादीपिकाप्रकरणम्.
३. महावाक्यार्थविवरणम्.
४. शिवज्ञानबोधार्थविद्याविवरणम्
५. महावाक्यदीपिकाविवरणम्.
६. महाविद्यादीपिकाविवरणम्.
७. मुक्तिविद्यादीपिकाविवरणम्.
८. पतिलक्षणविवरणम्.
९. पाशलक्षणविवरणम्.
१०. मोक्षसाधनविवरणम्.
११. मोक्षलक्षणविवरणम्.

By Maṇiśivācārya, Māṅguḍi, near Tanjore.

Date of transcription—4th day of the bright fortnight of the solar month Tulā in the year Khara. Name of the scribe—Vēṅkaṭasubrahmaṇya, son of Bhāskarōpādhyāya of Moḷahūru.

Complete.

**Beginning:**

सद्गुरुं दक्षिणामूर्तिं गणेशं च गुहं नुमः ।
कैलासेश्वरमानन्दवल्लीं मद्गुरुपञ्चकम् ॥

पूर्णानन्दचिति' स्वतो घृतघनीभावोपमाचित्तनुः
या कल्पाख्यलतेव भात्यभिधयाप्यानन्दवल्लीत्यजा ।
सा स्वार्था परनादवाङ्मयमयी हृद्यस्तु मे वैखरी-
रूपा नृत्यतु सन्ततं शिवयुता जिह्वाङ्गणे ज्ञानदा ॥

अथ विद्यावृत्तिप्रकरणस्य नातिविस्तरं विवरणं क्रियते । तत्रारब्धस्य ग्रन्थस्य निर्विघ्नेन परिसमाप्त्यर्थमादौ स्वेष्टदेवतानमस्क्रियारूपं मङ्गलमारचयति ह्रीमोम्मूर्त्यु(दि)तमित्यादिश्लोकत्रयेण —

ह्रीमोंमूर्त्युदितं नुमः पितृसमं जीवप्रकृत्योः परं
वेदाण्डादिकहेतुमर्च्यमखिलैरादौ हि सच्चित्तनुम् ।
विघ्नेशं कविबोधवाक्प्रदकविं साम्बात्मतासन्मुखं
चिद्व्रह्मेरुदितं गुहं दहरगं चोङ्कारचिच्चित्तनुम् ॥ ह्रीमोमिति ।

ह्रीमोंमूर्त्युदितं ह्रीमोंमूर्ती इव मूर्ती ययोस्तौ ह्रीमोंमूर्ती । वियदीकार-संयुक्त वीतिहोत्रसमन्वितम् । अर्धेन्दुलसितं देव्या बीजमिति देव्युपनिष-द्वास्या(क्या)त् ह्रीङ्काररूपा चिच्छक्तिः, शिवोऽद्वैतः । एवमोङ्कार इत्यादि-श्रुतिभिरोङ्काररूपश्शिवः ताभ्यामुदितम्.

* * * *

एवं मोचकगुरुं नत्वा मोचकप्रदं गुरुं नमस्करोति वेद इत्यादिना—

वेदे लिङ्गिन इत्यपि श्रुतिमहातात्पर्यलिङ्गानि या-
नीशानत्वमुखानु(न्यु)पक्रममुखान्युक्तानि शास्त्रे स्फुटम् ।
तज्ज्ञानाम्बुधिवर्धकं च हरदत्ताख्यं शिवाम्भोधिजं
वन्देऽहं द्विजराजमक्षयकलावन्तं चिदाकाशगम् ।

* * * *

एवं नित्यमङ्गलरूपान् गणपतिगुहाम्बिकाशिवशिवरूपाचार्यान् नत्वा तत्प्रसादजनितश्रुतितत्त्वज्ञानं स्वबुद्धिस्थितं ग्रन्थरूपेण बहिः प्रख्यापयति पद्यैरित्यादिना—

पद्यैस्सार्धशतेन वेदपतिजीवोपास्तिमोक्षार्थकै-
र्विद्यावृत्तिरजाज्ञयागमविधिः श्रुत्यादिमूलोच्यते ।
येशाष्टादशशक्तिगा चितिमयी शक्ता स्वतन्त्रान्यथा-
कर्तुं कर्तुमकर्तुमागमजगत्कर्त्री शिवाज्ञैव सा ॥

* * * *

**Colophon:**

इति विद्यावृत्तिप्रकरणे अपरविद्यादीपिकाविवरणं प्रथमप्रकरणं समाप्तम् ॥

**End:**

शिवं नमस्कुर्वन् ग्रन्थमुपसंहरति---वैधैरित्यादिना---
वैधैर्द्वादशलिङ्गकैश्श्रुतिपुराणाद्यर्थ ओङ्कारगो
योऽर्च्यः कादिकशास्त्रदृष्टिकलितैशत्वैश्च सूत्रौघगः ।
स्वेशानश्रुतिपर्वकैः कृतिरियं यस्याज्ञया वै कृता
तिष्ये पञ्चसहस्रकेऽर्णरहिते वर्षे शिवं तं न(नु)मः ॥

* * * *

यस्याज्ञया इयं विद्यावृत्त्याख्या कृतिः प्रकरणं कृता । तं शिव सच्चिदानन्दसम्पूर्णं स्वाभिन्नोमासहितं न(नु)म इति ॥

**Colophon:**

इति श्रीविद्यावृत्तिप्रकरणे मोक्षलक्षणविवरणमेकादशं प्रकरणं समाप्तम् ॥

श्रीमच्चोलमण्डलमण्डनायमानतञ्जानगरीमध्यस्थचूतग्रामनिवासिभिः श्रीमद्दक्षिणास्यसम्पूर्णप्रसादात्प्राप्तशिवविद्यापाराङ्गतैः द्वादशाब्दं नक्तव्रतपुरस्सरं त्रिसन्धि शिवार्चकैः मणिशिवाख्यैराचार्यैः विरचिता एकादशप्रकरणात्मिका विद्यावृत्तिस्सम्पूर्णा ॥

The scribe adds—

खरवर्षे तुलामासे शुक्लचतुर्थ्यां मरीचिपुरवासिना भास्करोपाध्यायकुमारेण वेङ्कटसुब्रह्मण्याख्येन विद्यावृत्तिरात्मार्थं स्वहस्तेन लिखिता ॥

अस्यां विद्यावृत्तौ पद्यैस्सार्धशतेनेतिचतुर्थश्लोकमारभ्य सार्धशतश्लोकासमाप्तिपर्यन्तं मङ्गलश्लोकास्त्रय आहत्य त्रयाधिकसार्धशतश्लोकाः ॥

| | श्लो. | | श्लो. |
|---|---|---|---|
| अपरविद्याप्रकरणे ... | 21 | महाविद्याप्रकरणे ... | 12 |
| दहरविद्याप्रकरणे ... | 16 | मुक्तिविद्याप्रकरणे ... | 8 |
| महावाक्यप्रकरणे ... | 16 | पाशपशुप्रकरणे ... | 2 |
| शिवज्ञानबोधप्रकरणे ... | 5 | मोक्षसाधनप्रकरणे ... | 22 |
| महावाक्यदीपिकाप्रकरणे .. | 10 | मोक्षलक्षणप्रकरणे ... | 4 |

आहत्य प्रकरणान्येकादश

---

R. No. **4331.**

Paper. 10¾ × 9⅝ inches. Foll. 34. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Vīrabhadra Miśragāru, Badagada, Ganjam district.

Foll. 33*b*—34*b* are left blank.

प्रेतकृत्यपद्धतिः.

PRĒTAKṚTYAPADDHATIḤ.

A treatise dealing with the procedure relating to the performance of funeral rites according to the school of Kaṇva.

Breaks off in the course of Sapiṇḍīkaraṇaprakaraṇa.

**Beginning :**

वन्दित्वा वन्द्यपादाब्जं जगत्तापहरं हरिम् ।
क्रियते प्रेतकृत्यस्य पद्धति(:) काण्वशाखिनाम ॥
प्रायश्चित्तं यथायुक्ति कृत्वा रोगादिमान् नरः ।
गच्छेत्काश्यादिकं तीर्थं कर्मारब्धं समापयेत् ॥
यद्यनन्तव्रतादीनां न कुर्यात्तत्समापनम् ।
तद्वा कर्तुं सुतं ब्रूयात्तद्व्रतस्य समापनम् ॥
आसन्नमृत्युर्दद्याद्गां सवत्सां स्वर्णशृङ्गिणीम् ।
तर्तुं नदीं वैतरणीं महावेगां पयस्विनीम् ॥
स्वयं दातुमशक्तश्चेत्तदा दद्युस्सुतादयः ।
तामदत्वा मृते तस्मिन् दद्युरेकादशेऽहनि ॥

* * * *

**Colophon :**

इति निराग्निदाहविधिः ॥

**End :**

आचम्य सर्वे ताम्बूलं खादित्वा नालिकेरकम् ।
समाषचणकं चापि शयीरन् शयने सुखम् ॥
विसर्जनाख्यकर्मैतत्समाचारप्रमाणकम् ।
केचित्कुर्वन्ति नाप्यन्ये कुलधर्मानुसारतः ॥

**Colophon :**

इत्येकादशाहरात्रौ विसर्जनविधिः ॥

प्रेतत्वविमुक्ति(मुक्त्यै)स्वर्गप्राप्तये द्वादशेऽहनि ।
समाचाराद्यथाशक्ति सत्कृत्य प्राशयेद्विजान् ॥
* * * *
याचितारश्च नस्सन्तु मा च याचिष्म कं चन ।
एतास्सत्याशिषः सन्त्वित्युक्ता सन्त्वित्युदीरितौ(तः) ॥
विप्रैश्च प्राङ्मुखस्तेभ्यो गृह्णीयादाशिषं ततः ।
सपवित्रान् कुशान् भूमावास्तीर्य.

---

R. No. **4332.**

Paper. 10¾ × 9⅝ inches. Foll. 110. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of Śrīmān Śyāmasundara-champaṭnāyaka, Sergada, Ganjam district.

सारस्वतक्रमकौमुदी.

SĀRASVATAKRAMAKAUMUDĪ.

A treatise on Sanskrit grammar like the Siddhāntakaumudī, but belonging to the grammatical school of Sārasvatas: by Vāsudēva who, at the beginning of the work, salutes Anubhūtisvarūpācārya, author of Sārasvataprakriyā, and was the pupil of Hṛdayānandasūribhaṭṭācārya.

Contains the Pādas 1—4 complete and breaks off in the 5th Pāda.

**Beginning :**

वन्दे श्रीपदकमलं निर्मलमतिदं शुभं गुरोर्नित्यम् ।
यदनुध्यानात्सद्यः प्रत्यूहा नाशमायान्ति ॥

सञ्जीवयंस्तन्मृतपुत्रकं यो ददौ प्रभुः श्रीगुरुणापि दिष्टः ।
स श्रीगुरूपासनकौतुकार्थः चकास्तु नित्यं हृदये मदीये ॥

* * * *

अनुभूतिस्वरूपायाचार्याय सुमहात्मने ।
सूत्रसप्तशती दत्ता सरस्वत्या च या पुरा ॥
तत्सूत्रक्रमबोधाय सर्वं सङ्गृह्य यत्नतः ।
विरच्यते मया सर्वसम्मता क्रमकौमुदी ॥

इह खलु शब्दानुशासनं विरचयितुकामा स्वल्पेनैवेन्द्रचन्द्रादिसमस्तव्याकरणं प्रतिपादयन्ती परमदयालुर्भगवती वाग्देवी सुखबोधाय यानि सूत्राणि प्रणिनाय, तानि स्वल्पाक्षराणि बहुलार्थानि विश्वतोमुखानि निस्तोभानि तथाव्याप्त्यतिव्याप्त्यसम्भवनैराश्येन व्याप्यव्यापकानि स्युः । तल्लक्षणं च—

स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥

* * * *

ग्रन्थस्य प्रकरणक्रममाह—

संज्ञा सन्धिर्विभक्तिश्च युष्मदस्मच्च कारकम् ।
तद्धितः स्त्री समासश्च दशधायातमित्यपि ॥
कृतश्च प्रत्यया अत्र क्रमेणैते निरूपिताः ।
तत्तत्क्रमानुसारेण ज्ञेया व्याख्या विचक्षणैः ॥

अत्र तावत्संज्ञां विना शास्त्रव्यवहारासिद्धेः प्रथमं संज्ञापादो निरूप्यते—

अ इ उ ऋ ऌ समानाः ।

* * * *

**Colophon:**

इति श्रीसारस्वतक्रमकौमुद्यां प्रथमः संज्ञापादः समाप्तः ॥

* * * *

स एवायं नागस्सहति कलभेभ्यः परिभवमित्यादौ आदवे लोपशिति लोपश् । सोऽहमाजन्मशुद्धानामित्यादौ तु लोपलोपशोरपवादेन अतोऽत्युरित्यनेन उकार इति ॥

**Colophon:**

इति विसर्जनीयसन्धिः ॥

इति श्रीवेदान्तविद्यावागीशमहामहोपाध्यायश्रीमद्धृदयानन्दसूरिभट्टाचार्यपादशिष्यवासुदेवाचार्यप्रणीतायां सारस्वतक्रमकौमुद्यां द्वितीयस्सन्धिपादः ॥

End:

प्रोष्ठपदयोः फल्गुन्योश्च द्वित्वे बहुवचनं वा ।

भत्वे सति प्रोष्ठपदयोः फल्गुन्योश्च द्वयोर्द्वित्वे बहुवचनं वा स्यात् । पूर्वे प्रोष्ठपदे पूर्वाः प्रोष्ठपदाः, पूर्वे फल्गुन्यौ पूर्वाः फल्गुन्यः ॥

Colophon:

इति श्रीसारस्वतक्रमकौमुद्यां चतुर्थ कारकपादः ॥

यः स्वप्रकृतिमासाद्य कृतवानखिलं जगत् ।
परं प्रत्ययरूपं तं श्रीकृष्णं प्रणमाम्यहम् ॥

कृत्कर्तरि । धातोरित्यनुवर्तते । वक्ष्यमाणाः प्रत्यया धातोः कर्तरि वाच्ये भवन्ति । ते च कृत्संज्ञकाः । कृदिति पादान्तं यावदधिक्रियते ।

* * * *

वाक्यं चाधिक्ये । आधिक्ये गम्ये वाक्यं च द्विर्भवति । अहो दर्शनीयाः, अहो दर्शनीया, मह्यं रोचते मह्यं रोचते । अत्र दर्शनीयस्य रुचेश्च द्वित्वेनाधिक्यं द्योत्यते ।

लोकाच्छेषस्य सिद्धिः.

---

R. No. 4333.

Paper. 10⅝ × 9¼ inches. Foll. 23. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of Śrīmān Maganimiśrakandaculi Rāja, Simhapuram, Aska post, Ganjam district.

Fol. 23*b* is left blank.

## वैद्यहृदयानन्दः.
## VAIDYAHṚDAYĀNANDAḤ.

A treatise describing the diagnosis of certain diseases and laying down the method of preparing medicines of various kinds: by Kavivararājamahāpātra, son of Nīlakaṇṭha who was the preceptor of the queen of Vikrama of Nandapura. It is stated that the author has also written another medical work called Vaidyālaṅkāra.

Complete in five Prakāśas dealing with the following subjects :—

१. ज्वरप्रतीकारः.
२. अतिसारादिप्रतीकारः.
३. कासादिप्रतीकारः.
४. अरोचकार्दिप्रतीकारः.
५. रसादिज्ञानम्.

**Beginning :**

कमलरुचिरनेत्रं गोपिकाकेलिपात्रं कनकसदृशवस्त्रं नीलमेघालिगात्रम् ।
करविकहि(सि)तगोत्रं नागजालारिपत्रं कलुषहरचरित्रं नौमि गोपेन्द्रपुत्रम्॥
गजेन्द्रवदनं वन्दे प्रपन्नभयभञ्जनम् ।
पार्वतीनन्दनं देवं कामदं सुरवन्दितम् ॥
श्रीराधेशपदारविन्दयुगलध्यानैकतानः सदा
नानाशास्त्रविचक्षणो गुणिहृदानन्दाब्धिशीतद्युतिः ।
श्रीयोगिग्रहराजसत्कविरिदं लोकोपकारोज्ज्वलं
स्वल्पेनाद्य तनोति वैद्यहृदयानन्दं सुकाव्यं शुभम् ॥

* * * *

कान्ते यदि त्वमधुना गदपीडितानां
भव्ये कुतूहलवती शृणु सावधाना ।
सर्वामयेषु बलवान् कथितो ज्वरो यत्
वक्ष्यामि तत्प्रथमतः प्रतिकारमस्य ॥
ललनेऽपघनानुलक्षितं ज्वरिणां लङ्घनमादितो हितम् ।
सुरभूरुहधान्यसिंहिकायुगशुण्ठीकृतपाचनं ततः ॥

* * * *

**Colophon :**

इति श्री कविवरयोगिग्र(ग्र)हराजमहापात्रविरचिते वैद्यहृदयानन्दे ज्वर-प्रतीकारो नाम प्रथमः प्रकाशः समाप्तः ॥

**End :**

पेटीमर्कटिकारवीक्षुरबलामाषावरी स्युः समाः
तुल्यैषां सुजया सिताज्यमधुभिः स्यान्मोदको दुग्धतः ।
संसेव्यो यदि मारकेलिरसिके वृष्येऽङ्गपुष्टिप्रदः
ख्यातोऽयं रतिवल्लभो रतिदश प्रौढाङ्गनावश्यदः ॥

रतिवल्लभसंदरोऽयम् ।

गोपनीयमिदं सर्वं तवाग्रेऽद्य प्रकाशितम् ।
लोकोपकारकः कान्ते यतस्त्वं प्राणवल्लभा ॥
यत्तातो प्र(ग्र)हराजज्यौतिषरविः श्रीनीलकण्ठस्सुधीः
श्रीमन्नन्दपुरेशविक्रमनृप[:] श्रीपट्टराज्ञीगुरुः ।
ब्रह्मण्यो जमदग्निदेवविदितः सन्नृसुराणां तु यः
कर्ता ग्रामयुगस्य चामरवरच्छत्रादिचिह्नाङ्कितः ॥
काव्यव्याकरणादिनाटककृती साहित्यसङ्गीतवि-
द्यो वैद्यस्वरशिल्पज्यौतिषकलाशास्त्रादिदक्षः स्वयम् ।
श्रीयोगिप्र(ग्र)हराजसत्कविरिदं वत्सान्वयक्षीराधि(धेः)
पूर्णेन्दुः स चकार वैद्यहृदयानन्दं स्वकान्तोक्तितः ॥
यावद् बृन्दावने राधा श्रीकृष्णप्रेमवर्धिनी ।
तावत्काव्यमिदं लोके तनोतु विदुषां मतिम् ॥ इति ।

**Colophon:**

इति श्रीकविवरयोगिप्र(ग्र)हराजमहापात्रविरचिते वैद्यहृदयानन्दे रसादिज्ञान नाम पञ्चमः प्रकाशः ॥

समाप्तोऽयं ग्रन्थः ॥

---

R. No. **4334.**

**Paper.** 10¼ × 9¾ inches. Foll. 14 Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Ittiri Vāriyar, Karakkattu desam, Kavalapara post, Malabar district.

Fol. 14 is left blank.

**वत्सराजप्रबन्धः.**

VATSARĀJAPRABANDHAḤ.

A treatise in the form of a Campu narrating the story of the marriage of Udayana, king of Vatsa, with Vāsavadattā.

Breaks off in the eighth Aṅka (chapter).

**Beginning :**

अस्ति स्वस्तिकरी समस्तजगतामस्तारि विस्तारिता
सालास्तम्भिमतार(तमार)कासरमणिप्रासादलम्बाम्बुदा ।
कौबेरीव महर्धिका शशिकुलक्षोणीभृतामास्पदं
कौशाम्बीति पुरा कुशाम्बरचिता कौशाम्बुपूरा पुरी ॥

* * * *

वत्सानामधिपतिरात्मकीर्तिरम्यां कौशाम्बीममरसमः पुरीं शशास ॥

महीपालस्य तस्यासीन्महि(षी मृ)गयाप(व)ती ।
महेन्द्रस्येव पौलोमी महिलानां शिखामणिः ॥

सततं सन्ततेर्वृद्धिं चिन्तयंस्तन्नराधिपः ।
सन्तर्पयन्ती भर्तारमन्तर्वाणी(र्वत्नी)बभूव सा ॥

* * * *

**Colophon :**

प्रथमोऽङ्कः ॥

**End :**

विविधमणिसमुज्ज्वले विमाने पतति सलज्जमिवार्करश्मिजालम् ।
कनकमयविशालसालभङ्ग्या विलसति गायति नृत्यतीव वासः ॥

**Colophon :**

षष्ठः ॥

देव्याः पूर्वं रूपशोभामृतेन व्याकृष्टत्वाद्दृष्टुमुद्रिक्तकर्णा ।
गत्वा गत्वा चेतसा सार्धमेनां दृष्ट्वा दृष्ट्वा दृष्टिरभ्यागतेव ॥

* * * *

सन्दर्शनं प्रत्यहमङ्गनानां पुंसामतिस्नेहविवृद्धिहेतुः ।
लब्धं च(त)दुद्धारमचिन्त्यमस्मात् प्राप्तामिवाहं दयितामवैमि ॥

**Colophon:**

सप्तमः ॥

* * * *

श्रुत्वाद्य वृत्तान्तमिमं स्मरार्तो हर्षं परं यास्यति वत्सराजः ।
प्रावृण्महाम्भोधरमन्द्रनादं घर्माभितप्तः श्रुतवान् शिखीव ॥

---

## R. No. 4335.

Paper. $10\frac{3}{4} \times 9\frac{5}{8}$ inches. Foll. 116. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Śaṅkara Mūssu, Planthole, Vilayur post, Malabar district.

Foll. 114*b*—116*b* are left blank.

आनन्दकन्दम्.

ĀNANDAKANDAM.

A treatise purporting to give the origin and properties of mercury, its different varieties, the method of using it in medical and other preparations, so as to produce the desired effect from it. This work is said to have been taken from Bhairavatantra.

Contains the Ullāsas 1—14 complete and breaks off in the 15th Ullāsa

**Beginning:**

कैलासशिखरासीनं कालकन्दर्पनाशनम् ।
प्रसन्नं परमेशानं जगदानन्दकारणम् ॥
प्रणम्य परया भक्त्या भैरवी स्तुतिमातनोत् ।

देव्युवाच—

देवदेव महादेव जन्मदारिद्र्यनाशन ।
प्रसीद करुणामूर्ते प्रसन्नपरमेश्वर ॥

* * * *

सर्वलोकोपकारार्थं गुह्याद्गुह्यतमं हितम् ।
रसेन्द्रस्य समुत्पत्तिं लक्षणं च सुरार्चिते ॥
तत्सर्वं सम्प्रवक्ष्यामि शृणु भैरवि साम्प्रतम् ।

* * * *

एवमेवं तत्र तत्र सर्वैर्विद्याधरैस्सुरैः ।
निक्षेपितः पारदेन्द्रो विद्यते दवि सिद्धिदः ॥

**Colophon:**

इति महाभैरवोक्ते आनन्दकन्दे प्रथमोल्लासः ॥

**End:**

नपुंसकगदक्षीणाः पित्तक्रोधाधिकास्तथा ।
यक्ष्मणो नैव योग्यास्स्युस्सदा विषरसायने ॥

**Colophon:**

इति श्रीमहाभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ चतुर्दश उल्लासः ॥

मलमायाविहीनेश जराजन्मगदापह ।
त्वत्प्रसादेन विदितं रसादीनां रसायनम् ॥
* * * *
सप्तधा भुवि ते जाता महावीर्याः स्थिरायुषः ।
ते सप्तदेशेषूत्पन्नास्सप्तधा नामधारकाः ॥
विन्ध्यदेशे कर्णकन्याकुब्जसो.

---

R. No. **4336.**

Paper. 10¾ × 9⅝ inches. Foll. 38. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Bhavadāsa Nambūdiri, Mandanattu-mana, Mayanur desam, Othapalam post, Malabar district.

Fol. 38*b* gives the name of the owner of the original MS.

पञ्चपादिकाव्याख्या — तात्पर्यार्थद्योतनी.

PAÑCAPĀDIKĀVYĀKHYĀ : TĀTPARYĀRTHADYŌTANĪ.

A commentary on Padmapādācārya's Pañcapādikā which itself is a commentary on Śaṅkarācārya's Brahmasūtrabhāṣya, which work has been described under No. 4660 of the D.C.S. MSS., Vol. IX : by Vijñānātman, disciple of Jñānōttama.

Complete.

**Beginning :**

यद्देहादिविकल्पकल्पितमिदासम्भेदमाभासते
यद्वा तत्तदुपाधिभेदभजनात्कर्य(र्म)व्यवस्थास्पदम् ।
भूयस्तद्विलये सति स्वयमखण्डानन्दचिन्मात्रकः
यच्चाभाति तदस्तु वस्तु दुरितध्वंसाय वश्शाश्वतम् ॥
दिग्भ्यस्संरम्भगर्भं सरभसमभियः प्रक्रमे विक्रमाणा-
दा(मा)रब्धा . यदीयाननपुटविलुठन्मानतर्कश्रवेण(?) ।
जल्पाकाश्चित्रक्लृप्ता इव दधति पुरः कम्पविद्वेषिवेषं
तस्मै ज्ञानोत्तमाय त्रिभुवनगुरवे नित्यमस्तु प्रणामः ॥

नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंश(ऋषि)भ्यो नमो गुरुभ्यः । ब्रह्मणो वेदान्तप्रतिपाद्यत्वसिद्धये मुमुक्षूणां जिज्ञास्यत्वसिद्धये च परमपुरुषार्थरूपत्वं दर्शयति—अनाद्यानन्देति । आनन्दस्य विषयेन्द्रिय-

संयोगसाध्यत्वदर्शनात् सातिशयत्वेन दृष्टत्वात् "स एको मानुष आनन्दः" इत्यादौ श्रुतत्वाच्च ।

* * * *

**Colophon:**

श्रीमत्परमहंसपरिव्राजकश्रीमज्ज्ञानोत्तमपूज्यपादशिष्यस्य विज्ञानात्मभगवतः कृतौ तात्पर्यार्थद्योतन्यां प्रथमाधिकरणं समाप्तम् ॥

**End:**

अनुत्पत्तिलक्षणाप्रामाण्याभावमाह—प्रत्ययोत्पादनादिति । संशयलक्षणाप्रामाण्याभावमाह—निश्चितेति । विपर्यासलक्षणाप्रामाण्याभावमाह—बाधानुपलब्धेश्चेति ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकश्रीमज्ज्ञानोत्तमपूज्यपादशिष्यस्य विज्ञानात्मभगवतः कृतौ तात्पर्यार्थद्योतन्यां चतुर्थं समन्वयाधिकरणं समाप्तम् ॥

The scribe adds—

दिवाकरकराग्रेण लेखिनीमुखगामिना ।
लिलेख लीलया नूनं टीकाव्याख्यानमुद्यतः ॥

---

R. No. **4337.**

Paper. $10\frac{5}{8} \times 9\frac{3}{8}$ inches. Foll. 98. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. belonging to the Sanskrit College, Tiruppanattura, Cochin State.

Fol. 98 is left blank.

## शिशुपालवधव्याख्या—सन्देहविषौषधिः.
## ŚIŚUPĀLAVADHAVYĀKHYĀ : SANDĒHAVIṢAUṢADHIḤ.

The commentary is the same as that described under R. Nos. 2688, 3179 and 3815 ante, wherein see for the beginning. By Vallabhadēva, grandson of Ānandadēva.

Contains the Sargas 11—19 complete and Sarga 20th incomplete.

**End:**

चतुर्थस्तु पादो नेमिस्थाने । अरामध्यं प्रत्यक्षरद्वयम् । शार्दूलविक्रीडितं वृत्तम् । चित्रमलङ्कारः । श्रीशब्दलक्ष्मत्वात् काव्यस्य सर्वसर्गसमाप्तौ श्रीशब्दप्रयोग इति भद्रम् ॥

**Colophon:**

इत्यानन्ददेवायनिवल्लभदेवविरचितायां माघकाव्यशिशुपालवधसारटीकायां सन्देहविषौषधिव्याख्या(समा)ख्यायामेकोनविंश[ति]स्सर्गः ॥

अथ चेदिराट् चैद्यस्सग्मितौ संयति भगवन्तं मुरारिमाह्वत आह्वास्त स्पर्धमान आहूतवान् । यत इति । पूर्वोक्तं तस्य विक्रममसूय्यन्नसहमानः गतभीर्निर्भयः ।

* * * *

रवेः किरणैः भूयः प्रसर्तु चक्रुबे(पे) प्रसरणाय वव्रते । प्रसृतः यतः प्रकृतिं स्वभावं प्रतिपाद . . . . . ।

R. No. **4338.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 44. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Naḍādūr Vidvān Vēṅkaṭaśēṣācārya, Villūr, Tirumangalam, Madura district

Foll. 44 is left blank

अलङ्कारकौस्तुभः

ALAṄKĀRAKAUSTUBHAḤ.

Same work as that described under R. No 369(*a*) ante. By Vēṅkaṭācārya, son of Aṇṇayācārya of Śrīśaila family; one additional stanza is given at the end:

भर्गो वरेण्यं सवितुस्सन्ध्यायामोऽतिशायिनम् ।
श्रीरङ्गनाथयोगीन्द्रं धियो यो नः प्रचोदयात् ॥

R. No. **4339.**

Paper. $10\frac{3}{8} \times 9\frac{1}{2}$ inches. Foll. 80. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Vāsudēva Sōmayājin, Vilayur, Pattambi, Malabar district.

Fol. 80 is left blank.

कौषीतकश्रौतकारिका.

KAUṢĪTAKAŚRAUTAKĀRIKĀ.

**Kārikās relating to the Śrautasūtras attributed to Kauṣītaka. The author, whose name is not given, was a disciple of Nārāyaṇa who was a disciple of Rāma, son of Sōma, and mentions Kṛṣṇa, Nīlakaṇṭha, Suyajña, etc.**

**Complete.**

**Beginning:**

सर्ववेदान्तवाक्यानां यस्मिन्नेव समन्वयः ।
तत् ब्रह्म दक्षिणामूर्तिसंज्ञं स्यान्मङ्गलाय मे ॥

*      *      *      *

यो वै भर्तृमहीसुरेन्द्रकुलजः ख्यातश्च लोकेऽग्रजैः
यो विद्यास्वपि चाखिलास्वधिगतं(तः) काष्ठां परामञ्जसा ।
यत्पादाम्बुजसेवनादधिगता मुग्धेन विद्या मया
तं वन्देऽखिलभूसुरेन्द्रतिलकं नारायणाख्यं गुरुम् ॥
(वि)द्यास्वग्रहणाधिकारिविरहाद्वार्तानभिज्ञान् मिथो
लब्ध्वा यस्सकलागमग्रहपटुः प्राप्ताः परां निर्वृतिम् ।
वन्दे सोमसुतं गुरोर्मम गुरुं तं रामनामास्पदं
बुद्धिर्यस्य निरन्तरं कृतधियो ब्रह्मण्यभून्निर्गुणे ॥
नारायणाख्यौ रामाख्यौ वासुदेवाह(ह्व)यौ तथा ।
यौ कृष्णनीलकण्ठाख्यौ गुरूनेका(ता)न् नमाम्यहम् ॥
यन्मा[न्मा]नसोदयगिरेरुदितश्श्रुतिभास्करः ।
कौषीनकमुदी(नी)न्द्रं तं तच्छिष्यांश्च नमाम्यहम् ॥
मीमांसावज्रसंविद्धाश्श्रुत्यर्थमणयोऽमलाः ।
भान्ति यत्सूत्रसंप्रोतास्त सुयज्ञमुनिं भजे ॥
सुयज्ञसूत्रजलधेर्येत्कृता वृत्तिर्नौर्दृढा ।
प . . . यं सन्तमाचार्यं वन्द(त)न्तसुतं श्रये ॥
यद्दर्शपूर्णमासादौ बह्वृचाम्नायचोदितम् ।
कौषीतकमतेनैतद्यथामति विचिद्य(न्त्य)ते ॥
गुरूपदेशमाश्रित्य धर्मान् कतिपयानिह ।
वक्ष्ये सूत्रक्रमेणादौ सामान्यात्(न्) सर्वकर्मसु ॥
देवकर्माणि यज्ञोपवीती प्राङ्मुख आचरेत् ।
पित्र्याणि कुर्यात्प्राचीनावीती प्राग्दक्षिणामुखः ॥

**End:**

अथाग्निषु परिस्तीर्णेष्वलैवासीत मन्त्रवत् ।
पूर्णाहुतौ हुतायां तद्धरमादाय कर्मणि ॥

समाप्ते निर्गतस्तीर्थेनाथ कृत्वा प्रदक्षिणम् ।
सर्वान् नमस्कृत्याशीर्भिर्युक्तस्तुष्टमना व्रजेत् ॥

## R. No. 4340.

Paper. 10¼ × 9¾ inches. Foll. 310. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Nārāyaṇa Nambūdirippāḍ, Manager, Sabhāmaṭham, Kunnankulam post, Cochin State.

Fol. 309*b* gives the name of the owner of the original MS. Fol. 310 is left blank.

Bound in two volumes.

### नैष्कर्म्यसिद्धिः, विवरणसहिता.
### NAIṢKARMYASIDDHIḤ WITH VIVARAṆA.

Same text as that described under No. 4610 and similar to the commentary described under No. 4611 of the D.C.S. MSS., Vol. IX. The text is by Surēśvarācārya and the commentary by Akhilātman, pupil of Daśarathapriyapūjyapāda.

Complete in four chapters.

**Beginning :**

विशुद्धविज्ञानचतुष्टयात्मने जगत्प्रसूतिस्थितिनाशकारिणे ।
चतुर्विधाय त्रिगुणाय वि(जि)ष्णवे नमस्सदा सर्वहिताय विष्णवे ॥

समन्वयाङ्गवां शुद्धां सर्वमानाविरोधिनीम् ।
ब्रह्मात्मानुगतां विद्यां नमामि भवभेदिनीम् ॥

परात्म(बिम्ब)प्रतिबिम्बिता या नैष्कर्म्यसिद्धिर्यत आबभूव ।
सुदर्पणे स्पष्टमिवात्मबिम्बं तस्मै सुरेशाय नमोऽस्तु नित्यम् ॥

विद्यासीतासहायो विमलशमरथस्सर्ववेदान्तधन्वी
शश्वद्धर्मानुजे(जा)तो वशगतपुरवो मानयुक्तीषुधारी ।
पौलस्त्यं ब्रह्मविद्यापहरणचतुरं योऽवधीन्मोहशत्रुं
रामं तं नौमि वन्द्यं मम गुरुमनिशं योगकान्taraरामम् ॥

शमदमादि(क)गां परमात्मगां धियमवापुरलं यदनुग्रहात् ।
मुनिगणा गुणपूगनिकेतनं दशरथप्रियमेव नमामि तम् ॥

दशरथप्रियमस्करिभास्करस्फुटपदाम्बुजचिह्नितमस्तकः ।
परमभक्तित एव सुरेशसत्प्रकरणोपनिबन्धनमारभते(भे) ॥

" आब्रह्मस्तम्बपर्यन्तैरित्याद्यशेषवेदान्तसारसङ्ग्रहप्रकरणमारभ्य " इत्यन्तेन ग्रन्थेन सम्बन्धोक्तिकारोऽधिकार्यभावादधिकारिसाध्यसाधनस्य विवक्षितमोक्षपुरुषार्थसाधनत्वाभावात् विवक्षितपुरुषार्थाभावात् सम्बन्धाभावाद्विषयाभावात् प्रारिप्सितप्रकरणस्य प्रकरणलक्षणाभावाच्चानारम्भमाशङ्कयारम्भं समर्थयते ।

* * * *

**Colophon :**

इति श्रीमद्दशरथप्रियपूज्यपादशिष्यस्य भगवतोऽखिलात्मनो नैष्कर्म्यसिद्धिविवरणे प्रथमो(ऽध्याया)र्थः ॥

**End :**

यथोदितं प्रकरणं सम्यग्ज्ञात्वा कृतार्थो भवतीत्युक्तम् । तज्ज्ञानमूलं किमित्याकाङ्क्षायां सम्बन्धोक्तिरेवेत्याह—

सम्बन्धोक्तिरियं साध्वी प्रतिश्लोकमुदाहृता ।
नैष्कर्म्यसिद्धेर्ज्ञात्वेमां व्याख्यातास्याभवेद्ध्रुवम् ॥

सत्यज्ञानमनन्तं च परमानन्दमद्वयम् ।
सा . . . तापरोक्षमा नमामि भवभेदिनम् ॥

* * * *

नैष्कर्म्यसिद्धिमार्ताण्डः कैवल्यदिनकृद्यतः ।
आविरासीन्नमस्तस्मै सुरेशाय पुनः पुनः ॥

गुरुभक्तिभूषणविभूषितधीः द(दशास्त्र)निश्चयमहानिधिमान(न्) ।
विनयाम्बुजाञ्जलिमयं विकिरन् अखिलात्मको नमति पूज्यतमान् ॥

इति सन्न्यायसौगन्ध्यश्रीः पु(कृतिः) ग्रथिता मया ।
मलामलाधमाप्नोति तद्विष्णोः परमं पदम् ॥

**Colophon :**

इति श्रीमद्दशरथप्रियपूज्यपादशिष्यस्य भगवतोऽखिलात्मनः कृतौ नैष्कर्म्यसिद्धिविवरणं समाप्तम् ॥

## R. No. 4341.

Paper. 10⅜ × 9⅝ inches. Foll. 228. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M R.Ry. Nārāyaṇa Nambūdirippāḍ, Pumalli-mana, Chalasseri post, Malabar district.

Foll. 148*b* and 228 are left blank.

Bound in two volumes.

### ऐतरेयब्राह्मणवृत्तिः—सुखप्रदा.

### AITARĒYABRĀHMAṆAVṚTTIḤ : SUKHAPRADĀ.

Same work as that described under R. No. 3682 ante, wherein see for the beginning. By Ṣaḍguruśiṣya

Contains the Adhyāyas 13—40.

**End:**

शत्रुचेष्टास्तु गृह्णन्तां चारैस्सश्चास्तुते स्फुटम् ।
कुर्वाणस्य व्रतं चैवं ध्रुवश्शत्रुजयो भवेत् ॥

इत्याह । अपि ह यद्यस्याश्मा मूर्धा द्विषन् भवति । क्षिप्रं वैनं स्तृणुते । स्तृञः स्वादिर्लिट् लिङर्थे च । यो राज्ञोऽस्य द्विषन् भवेत् । तस्य . . . . . . . . . . . .

. . . . . स्यादश्मभिर्निर्मितो दृढम् ।
तमेष स्तृणुते हिंस्याद्राजा विजितशत्रुकः ॥
सर्वसं . . . . . . . . . . . . . . . ।

**Colophon:**

इति षड्गुरुशिष्यविरचितायामैतरेयब्राह्मणवृत्तौ सुखप्रदायां चत्वारिंशोऽध्यायः ॥

---

## R. No. 4342.

Paper. 10⅜ × 9½ inches. Foll. 144. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of Mahāmahōpādhyāya Nārāyaṇa Nambūdirippāḍ, Kunnankulam post, Cochin State.

Fol. 144 is left blank.

### पदार्थतत्त्वनिर्णयविवरणम्.

### PADĀRTHATATTVANIRṆAYAVIVARAṆAM.

A commentary on Ānandānubhava's Padārthatattvanirṇaya, which work has been described under R. No. 2981 ante: by Ānandajñāna, disciple of Śuddhānandapūjyapāda. This work is also called Tarkavivēka.

Complete.

**Beginning:**

यज्जिज्ञास्यमपास्य मोहकुहकं संविद्रते सद्गुता(जना)
यज्जन्मादिनिदानम . . . . . . . . . . . . ।
. . . . . . . मानपदवीमासाद्य निष्कृण्वते
पूर्णं तत्पुरुषोत्तमाख्यममलं धामानिशं संश्रये ॥
नमस्त्रय्यन्तसन्दोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥
यदीयदिव्यात्रनमोविकस्वरं मनो मदीयं विदुषां यथार्थतः ।
पदार्थतत्त्वस्य भजे तदैश्वरं महोऽतिदूरीकृतभेदविभ्रमम् ॥
आनन्दज्ञानसंज्ञेन यतिना विहिता कृतिः ।
सेव्यतां धीधनैरेषा सदसद्व्यक्तिहेतुभिः ॥

प्रचिकीर्षितस्य प्रकरणस्याप्रत्यूहान्तप्राप्तये विघ्नराजं पूजयति—स जयतीत्यादिना । तत्र सर्वनाम्नस्तावदौत्सर्गिकं प्रसिद्धार्थत्वम्—यथा(दा)हुः—सर्वनाम प्रसिद्धार्थं प्रसाध्यार्थविघातकृत् इति ।

* * * *

द्रव्यं व्याख्यातमाख्याततर्ककर्कशधीमताम् ।
आवेद्यं वेद्यमस्माकमनाम(क)स्मिकचतसाम् ॥

**Colophon:**

इति पदार्थतत्त्वनिर्णयविवरणे द्रव्यपरीक्षा समाप्ता ॥

* * * *

**Colophon:**

इत्यानन्दगिरिकृतौ पदार्थतत्त्वनिर्णयविवरणे जातिभेदनिरूपणम् ॥

**End:**

वक्तव्यस्याखिलस्यापि संक्षेपतो निक्षिप्तत्वादवशिष्टमुपदेष्टव्यमपश्यत्(न्), प्रकरणार्थमुपसंहरति—इत्यलमिति । ये हि प्रतिपक्ष . . . . . . . . . . . . मिति सूचयति—पदार्थेति । ये पुनः स्वपक्षसाधनप्रधाना मुमुक्षवः मोक्षसाधनं सम्यग् ज्ञानमेवापेक्षन्ते . . . . . . . . . . . . .

. . . . . यदि सारमुत प्रतीयुः
दोषं समाहितधियो मम तत् क्षमन्ताम् ॥
व्याख्यासङ्घातर्ककचचयरयस्वस्तदुस्तर्कशङ्का-
शङ्काव्याजप्रकारप्रसरपरमता वस्तुतत्त्वं श्रयन्ती ।
शुद्धानन्दाङ्घ्रियुग्मस्मृतिभरनिभृतप्रौढगूढोक्तिगाढा-
नन्दज्ञानप्रणीता जगति मुदमियं सन्ध्यया संविधत्ताम् ॥
व्याख्यां तर्कविवेकाख्यामानन्दज्ञानमस्करी ।
शुद्धानन्दपदाम्भोजभृङ्गायितमना जगौ ॥
कलिङ्गदेशाधिपतौ नरेन्द्रे भुवं प्रशासत्यमरेन्द्रतुल्ये ।
नृसिंहदेवे जगदेकवीरे नरोत्तमेऽकारि मया निबन्धः ॥
कृता(तर्क)विवेकेन सुकृतं यत्कृतं मया ।
प्रसीदतु सदा तेन भगवान् पुरुषोत्तमः ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्द(पूज्यपाद)शिष्येण भगवदानन्दज्ञानेन कृते पदार्थतत्त्वनिर्णयाविवरणे तर्कविवेके सिद्धान्तपरिच्छेदः समाप्तः ॥

---

## R. No. 4343.

Paper. $10\frac{3}{4} \times 9\frac{7}{8}$ inches. Foll. 58. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Śaṅkara Nambūdirippāḍ, Valiyadattu-mana, Lakkidi post, Malabar district.

Foll. 57*b* and 58 are left blank.

**बृहतीव्याख्या—ऋजुविमलापञ्जिका.**

BṚHATĪVYĀKHYĀ : ṚJUVIMALĀPAÑJIKĀ.

Same work as that described under R. No. 2682 ante, wherein see for the beginning. By Śālikanātha.

Contains the first two Pādas complete and the third Pāda incomplete in the 10th Adhyāya and the first Pāda of the 12th Adhyāya incomplete.

**End:**

अथ द्वादशस्याध्यायस्य प्रथमः पादः—

अत्र भाष्यकारः फलमाह । एकादशाध्याये तन्त्रालापलक्षणं व्याख्यातम् । अधुना द्वादशे प्रसङ्गलक्षणं व्याख्यास्यामः । तच्चैतद्वच-

वर्तिष्यमाणानुकीर्तनसम्बन्धकथनार्थं तत्र पृच्छति—कः पुनरनयोर्लक्षणयोस्सम्बन्धः । यत्कथनार्थमिदं भाष्यमिति पृच्छतश्चायमाशयः । तन्त्रेऽपि सकृदनुष्ठानप्रसङ्गेऽपि तदनयोर्न हेतुहेतुमद्भावस्सम्भवति ।

* * * *

कथं पुनः प्राप्तिसिद्ध्या कार्यैक्यसिद्धिरित्यत्राह—कार्यविशेषे हि प्राप्तिः । यदा प्रकृतिविकृत्योरङ्गकार्यविशेषो भवति, तदास्तु तावदङ्गानां प्राप्तिर्भवति । विकृतिभूतश्च पशु.

---

R. No. **4344.**

Paper. 10⅝ × 9½ inches. Foll. 130. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. N. Subrahmaṇya Śāstrigaḷ, Sanskrit Pandit, Tirukkurungudi, Tinnevelly district.

Foll. 30*b* and 129*b*—130*b* are left blank

खण्डनखण्डखाद्यव्याख्या—खण्डनभूषामणिः.

KHAṆḌANAKHAṆḌAKHĀDYAVYĀKHYĀ : KHAṆḌANA-BHŪṢĀMAṆIḤ.

A commentary on Śrīharṣa's Khaṇḍanakhaṇḍakhādya, which work has been described under R. No. 2762 ante : by Raghunātha.

Contains the first Paricchēda incomplete.

**Beginning :**

आनम्य भक्तिनम्रश्शम्भुं साम्भोधिजाकान्तम् ।
श्रीरघुनाथस्तनुते खण्डनभूषामणिं कुतुकात् ॥

धीराः कुशाग्रमतयो विबुधा नितान्तं
वेदान्ततन्त्रमिह ये परिशीलयन्ति ।
तेभ्यो ममेदमुपढौकितमल्पबुद्धि-
क्षोभप्रदं यदि भवेन्मम कोऽपराधः ॥

जाततत्त्वसाक्षात्कारोऽपि लोकसङ्ग्रहार्थं मङ्गलमातनोति—अविकल्पेति । विकल्पो विरुद्धकोटिकं ज्ञानं संशयः तदविषयः । यतः श्रुतिषूपनिषत्सु श्रुतोऽस्ति स(त्त्व)रूपः एकः स्थाणुः पुरुष इति ।

**End :**

समानप्रकारकनिश्चयस्यैव संशयविरोधित्वेनायं धूमो वह्निव्याप्य इति निश्च(य)स्थले तत्रैव धूमत्वावच्छेदेन व्याप्यग्रहात् धूमो वह्निव्याप्यो न

वेति संशयविरोधात् । किं च विनापि सामान्यस्य प्रत्यासत्तित्वं धूमप्रत्यक्षे धूमेन्द्रियसन्निकर्षस्य हेतुत्वं नतु यावद्धूमसन्निकर्षस्य ।

---

R. No. **4345.**

Paper. 10¾ × 9½ inches Foll. 122. Lines, 20 in page. Dēvanāgarī. Good

Transcribed in 1923-24 from a MS. of Nārāyaṇa Nambūdirippāḍ, Pummalli-mana, Chalasseri, Malabar district.

Fol. 122*b* is left blank.

शब्दकौस्तुभः.

ŚABDAKAUSTUBHAḤ.

Same work as that described under No. 1324 of the D.C.S. MSS., Vol. III, wherein see for the beginning. By Bhaṭṭōjidīkṣita.

Contains the fourth Adhyāya complete.

**End:**

भावे च । शिवादिभ्यो भावेऽर्थे तातिस्स्याच्छन्दसि । शिवस्य भावश्शिवतातिः, शन्तातिः, अरिष्टतातिः ॥

यतोऽधिकारस्समाप्तः । छन्दसीत्यधिकारश्च ॥

**Colophon:**

इति श्रीपदवाक्यप्रमाणपारावारपारीणस्य लक्ष्मीधरस्य सूनुना भट्टोजिभट्टेन कृते शब्दकौस्तुभे चतुर्थस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् । पादश्च समाप्तोऽध्यायश्च ॥

---

R. No. **4346.**

Paper. 10¾ × 9½ inches. Foll. 82. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of Śrīmān Phekiar Udgātṛ, Syamaghanapuram, Dharakota post, Ganjam district.

Fol. 82 is left blank.

वार्त्तिकसङ्ग्रहः—काशिकावार्त्तिकव्याख्या.

VĀRTTIKASAṄGRAHAḤ: KĀŚIKĀVĀRTTIKAVYĀKHYĀ.

A commentary on the metrical Vārtikas in the Kāśikāvṛtti of Jayāditya and Vāmana, which work has been described under No. 1313 of

the D.C.S. MSS., Vol. III: by Rudradhara, younger brother and pupil of Haladhara, son of Lakṣmīdhara.

Complete.

**Beginning:**

श्रीमानस्ति समस्तपण्डितसभाविद्वज्जनोल्लेखन-
प्रस्तावप्रथमाभिधानविषयो लक्ष्मीधरोऽतिक्षमी ।
आचारैकनिधिः श्रुतिस्मृतिसरित्पारीणहंसाग्रणीः
साङ्ख्यन्यायकणादपाणिनिमतव्याख्यानकृत्काव्यवित् ॥
तत्सूनुः प्रतिवादिवारणघटासिद्धान्तकुम्भस्थल-
च्छेदापाकृतकीर्तिमौक्तिकलसत्सन्त(त)कैनानानखः ।
न्यायारण्यमृगाधिपो हलधरः श्रीमानसौ राजते
वेदज्यौतिषकोशकाव्यकुशलो वैशेषिकाध्यापकः ॥
येन प्राक्तनसम्प्रदायसरणिच्छेदान्महादुर्गमं
नानाभ्रान्तिलताप्रतानपिहिता प्राप्तेषु तत्तत्फलम् (?) ।
छित्त्वा बुद्धिपरश्वधेन बहुधा ता भ्रान्तिवल्लीततीः
नीतं व्याकरणाख्यकाननमिदं सर्वैः सुगन्तव्यताम् ॥
तस्याचारवतस्तपोगुणयुता ये भ्रातरो विश्रुताः
तेषामेष कनिष्ठ उत्तमगुणात्तस्मादधीतागमः ।
श्रीमान् रुद्रधरः स्वशिष्यहितकृत्तत्तत्प्रदेशास्थितं
सङ्गृह्णाति समस्तवार्त्तिकपदं वृत्तिस्थमद्यादितः ॥

भगवत्पाणिनिप्रणीतानि सूत्राणि विवरीतुकामो वृत्तिकृत् स्वकर्तव्यं दर्शयितुमाह—

वृत्तौ भाष्ये तथा नामधातुपारायणादिषु ।
विप्रकीर्णस्य तन्त्रस्य क्रियते सारसङ्ग्रहः ॥

वृत्तावित्यादि । तन्त्रस्य सारसङ्ग्रहः क्रियत इति योजना । मयेत्य-ध्याहार्यम् । तन्त्र्यन्ते व्युत्पाद्यन्ते शब्दा अनेन तन्त्रं शास्त्रम् ॥

* * * *

प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा ।
विदुषां शब्दसिद्ध्यर्थं पातु सास्मान् शरावती ॥

प्रागुदश्चावित्यादि । शरावती नाम नदीविशेषः अस्मान् पातु रक्षतु । का सा? या विदुषां पण्डितानां शब्दसिद्ध्यर्थं प्रयोगसिद्धये प्रागुदञ्चौ देशौ विभजते ।

* * * *

**Colophon:**

इति श्रीमहामहोपाध्यायश्रीमद्रुद्रधरविरचिते वार्त्तिकसङ्ग्रहे कारकपादस्समाप्तः । प्रथमोऽध्यायस्समाप्तः ॥

**End:**

ननु षत्वं त्रिपादिकार्यं सपादसप्ताध्यायीकार्यं द्विर्वचनमिति द्विर्वचने कर्तव्ये पूर्वत्रासिद्धमित्यस्यासिद्धत्वात् कुतः स्विपिभूतो द्विरुच्यते इति प्रक्रिया । नैतदस्ति—पूर्वत्रासिद्धीयमद्विर्वचन इति वचनात् द्विर्वचने षत्वं सिद्धमेवेति सर्वमवदातम् ॥

भ्रातृसूक्तिसुधासेकसञ्जातमतिवैभवैः ।
श्रीमद्रुद्रधरेणैष कृतो वार्त्तिकसङ्ग्रहः ॥
न्यासश्चेत्किमनेनेति मात्र कुप्यमनादरम् ।
निपुणं ह्यनयोरेव विशेषः सम्प्रसा(धा)र्यताम् ॥

**Colophon:**

इति श्रीमहामहोपाध्यायश्रीमद्रुद्रधरविरचिते वार्त्तिकसङ्ग्रहेऽष्टमोऽध्यायः समाप्तः ॥

## R. No. 4347.

Paper. $10\frac{7}{8} \times 9\frac{5}{8}$ inches. Foll. 82. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Nārāyaṇa Nambūdirippāḍ, Kūtalur-mana, Nareri, Tritala, Malabar district.

Fol. 82 is left blank.

### काव्यादर्शव्याख्या—श्रुतानुपालिनी.

### KĀVYĀDARŚAVYĀKHYĀ · ŚRUTĀNUPĀLINĪ.

Same work as that described under R. No. 2746 ante. By Vādijaṅghāla.

Breaks off in the third Paricchēda.

**Beginning:**

मुरारेर्नाभीकमलाज्जातो यश्चतुराननः ।
ज्ञानं मे तत्प्रिया देयात् (सर्व)शुभ्रा तु भारती ॥

लक्ष्मी . . . . . . . . . . . . . . . . |

नीता वराहवपुषा समुन्नतिं येन वसुधेयम् ॥

अविघ्नेन शास्त्रसमाप्तिमभिवाञ्छन् चतुर्मुखेत्यादिनाशीर्द्वारेण वाग्देवतामभिष्टौति । चतुर्मुखो ब्रह्मा तस्य मुखान्यम्भोजानीव [मुखानि] मुखाम्भोजानि, उपमितं व्याघ्रादिभिरित्यादिना समासः । तेषां वनमिव वनं समूहः पद्मषण्डः हंसस्य वधूर्हंसी सा मानसं सरश्चित्तं चोच्यते ।

* * * *

**Colophon :**

इति दण्डिविरचितालङ्कारस्य टीकायां वादिजङ्घालदेवरचितायां मार्गविभावना परिच्छेदः प्रथमः ॥

**End :**

प्रकृतमुपसंहरति—

व्युत्पन्नबुद्धिरधुना विधिदर्शितेन
मार्गेण दोषगुणयोर्वशवर्तिनीभिः ।
वाग्भिः कृताभिसरणो मदिरेक्षणाभि-
र्धन्यो युवेव रमते लभते च कीर्तिम् ॥

निगदेनैव व्याख्यातम् ॥

**Colophon :**

इति वादिघङ्घालविरचितायां दण्डिकाव्यालङ्कारटीकायां यमकप्रहेलिकाकाव्यदोषविभावना ॥

---

R. No. **4348.**

Paper. 10¾ × 9½ inches. Foll. 342. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Nīlakaṇṭha Nambūdirippāḍ, Kannur-mana, Ottapalam, Malabar district.

Fol. 342 is left blank.

Bound in two volumes.

## ईशानशिवगुरुदेवपद्धतिः.

## ĪŚĀNAŚIVAGURUDĒVAPADDHATIḤ.

**Same work as that described under R. No. 3054 ante.**

**Contains the Mantrapāda complete.**

## R. No. 4349.

**Paper.** 10¾ × 9⅝ inches. **Foll.** 728. **Lines**, 20 in a page. Grantha. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Paliyattu Valiya Acchan, Sennamangalam, Parur post, Cochin State.

Fol. 368 is left blank.

Bound in four volumes.

### सिद्धान्तकौमुदीव्याख्या—अर्थप्रकाशिका.

SIDDHĀNTAKAUMUDĪVYĀKHYĀ · ARTHAPRAKĀŚIKĀ.

A commentary on Bhaṭṭōjidīkṣita's Siddhāntakaumudī, which work has been described under No. 1354 of the D.C.S. MSS., Vol. III: by Śaṅkara of Kerala country. This work is also called Vimarśinī.

Contains the Pūrvārdha only.

**Beginning:**

जटाजूटगूढह्वदिन्यम्बुपातैस्त्रुटद्भस्म[खण्ड]कण्ठस्फुरत्कालकूटः ।
नटानां वरेण्यः स्वनृत्तावसाने कटाक्षेण मां पालयेन्नीलकण्ठः ॥

मद्गुरूंस्तद्गुरून् नत्वा सद्गुणानुद्गुणन्मुनीन् ।
व्याख्यां सिद्धान्तकौमुद्याः करोम्यर्थप्रकाशिकाम् ॥

अत्र तावदत्रभवान् भट्टोजिदीक्षितः समस्तसूत्रार्थप्रतिपादकं सयुक्तिकप्रक्रियोपेतं किमपि व्याकरणप्रकरणं चिकीर्षु[र्नि]र्विघ्नविघाताय कृतं मुनिनमस्काररूपं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नन् चिकीर्षितं प्रतिजानीते—मुनित्रयमिति । पाणिनिकात्यायनपतञ्जलीनां त्रयम् । नमस्कृत्य उपपदविभक्तेः कारकविभक्तिर्बलीयसीतिन्यायात् नमस्करोति देवानित्यत्रेव करोत्यपेक्षया कर्मविभक्तिः इति मूल एव स्फुटीभविष्यति ।

* * * *

**Colophon:**

शङ्करशङ्करविप्रग्रथितायां कौमुदीविमर्शिन्याम् ।
इत्थमजन्तनपुंसकलिङ्गास्सम्यग्विचारिताः क्रमशः ॥

* * * *

**Colophon:**

केरलशङ्करबाडवशङ्करकृतकौमुदीविमर्शिन्याम् ।
स्त्रीबहलन्तविचारस्समापितोऽथाव्ययार्थसुविमर्शः ॥

**End:**

एषा हि युद्धमर्यादा। "यथा चार्थे द्वन्द्वः इति स्वार्थे द्वित्वम्। पुंस्त्वं लोकात् । अयं योगविभागो भाष्ये न दृश्यते । द्वन्द्वं युद्धानीत्यत्र

मर्यादावचनेन सिद्धम्। एषा हि युद्ध(द्धे)मर्यादा शीतोष्णादिषु [यथा] अभिव्यक्त्या सहचरितत्वं शब्दप्रयोगे बोध्यम् । चार्थे द्वन्द्व इति तु संज्ञाशब्दोऽव्युत्पन्नः । अवयवार्था[भि]धा(भा)नादिति तदाशयः" ॥

विस्तरस्त्विह विज्ञेयो बृहच्छब्देन्दुशेखरात् ।
इत्युक्तं नागभट्टेन लघुशब्देन्दुशेखरे ॥
द्वन्द्वमव्ययमित्याह श्रृङ्गारे भोजभूपतिः ।
क्रियाविशेषणमिति परे प्राहुर्मनीषिणः ॥
द्वन्द्वं मन्त्रयतेऽमात्यैस्स्वस्रा द्वन्द्वं ययुर्वयः ।
पारावताख्या युद्धेषु द्वन्द्वं तिष्ठन्ति सैनिकाः ॥
यज्ञपात्रप्रयोगे तु द्वन्द्वं पात्राणि सादयेत् ।
अभिव्यक्तिः प्रसिद्धिस्स्यात् द्वन्द्वं पर्वतनारदे ॥

**Colophon:**

इति कौमुद्यर्थप्रकाशिकायां पूर्वार्धं समाप्तम् ॥

---

R. No. **4350.**

**Paper.** 10¾ × 9⅝ inches. **Foll.** 150. **Lines,** 20 in a page. **Dēvanāgarī. Good.**

Transcribed in 1923-24 from a MS. of Śrīmān Kāla Ratha, Chochinajagannathapuram, Kudala post, Ganjam district.

**ललितराघवम्.**

LALITARĀGHAVAM.

A Mahākāvya describing the main story of the Rāmāyaṇa.

Contains the Sargas 1—21 complete and breaks off in the course of the 22nd Sarga (Indrajidvadha portion).

**Beginning:**

भास्वत्कुले नृपतिमौलिकिरीटकोटिप्रत्युप्तरत्नकरचित्रितपादपीठः ।
राजा दिलीपतनयो रघुरित्यभिख्यां लब्ध्वा शशास वसुधां वसुधासुधांशुः ॥
विप्रेन्द्रपाणिकमलोदरवासलोलां लोलां सतो नृपतिसम्पदमात्मनीनाम् ।
यो भूमिछत्रदलनो विदधन्मखेषु मृद्भाजनैर्व्यवजहार विशालसत्त्वः ॥

* * * *

तस्यात्मजो दशरथो जगतीं प्रशास्ति
भास्वान् द्वितीय इव भास्करवंशजानाम् ।
जायासु तस्य तिसृषु क्षितिभारनाशे
नित्योद्यतः स्वजनने मधुहा धृतेहः ॥

कन्यात्रयं मगधकोसलकेकयानां भूमीभृतां सपदि तस्य परिग्रहोऽस्ति ।
सम्प्रत्ययं नरपतिर्दशमी बभूव किं स्तोष्यते स जनकोऽसुरसूदनस्य ॥

* * * *

श्रीराघवस्य चरिते ललितार्थसार्थे काव्ये नवे ललितराघवनामकेऽस्मिन् ।
गाधिप्रसूतनरदेवसमागमाख्यस्सर्गः समाप्तिपदवीं प्रथमो जगाम ॥

**Colophon :**

इति ललितराघवे महाकाव्ये राजकौशिकसंवादो नाम प्रथमस्सर्गः ॥

**End :**

सौमित्रिणा समरमूर्ध्नि हतेऽतिकाये शेषाः सपत्ननिकरैः प्रहृता अनाथाः ।
लङ्कां प्रपद्य सहसा दश(कन्धरायालीकं) समीकचरितं कथयाम्बभूवुः ॥
श्रीराघवस्य चरिते ललितार्थसार्थे काव्ये नवे ललितराघवनामकेऽस्मिन् ।
सर्गः स्वपक्षपरपक्षरणाभिधायिश्लोकावलीविरचितोऽगमदेकविंशः ॥

**Colophon :**

इति श्रीललितराघवे बलद्वयविमर्दनो नाम एकविंशस्सर्गः ॥

ततः क्षितीशः क्षणदाचराणां युद्धे नियुद्धे च वनालयानाम् ।
साधारणादन्यदवेत्य वीर्यं जीर्यत्तरौजाः स बभाज जोषम् ॥

* * * *

मुहुः परावर्तनतोऽतिरौद्रं नानद्यमानस्य विहस्तभावात् ।
आच्छिद्य मूर्धा.

---

## R. No. 4351.

**Paper.** 10⅝ × 9⅝ inches. Foll. 384. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923–24 from a MS. of the Raja of Punattur, Kottapudi post, Malabar district.

Foll. 184, 338*b* and 384*b* are left blank.

Bound in two volumes.

## प्रतिष्ठातन्त्रम्.
## PRATIṢṬHĀTANTRAM.

Similar to the work described under No. 3704 of the D.C.S. MSS., Vol. VII; the procedure herein has been taken from the Ādipurāṇa.

Complete in four parts, each part containing 12 Āśvāsas.

Date of transcription—Wednesday, the 13th day of the solar month Makara in Kollam year 1040. Name of the scribe—Vallitteyyan.

Deals with the following subjects :—

### I. शिवभागे.

१. सर्वतन्त्रोत्पत्तिः.
२. भूमिलक्षणविधिः.
३. वास्तुबलिविधिः.
४. गर्भन्यासविधिः.
५. गर्भविन्यासलक्षणम्.
६. वास्तुप्रासादलक्षणम्.
७. प्राकारलक्षणम्.
८. प्रतिमालक्षणम्.
९. मण्टपलक्षणम्.
१०. स्नपनाङ्गविधिः.
११. सर्वस्नपनविधिः.
१२. शेषाधिकारविधिः.

### II. विष्णुभागे.

१. प्रतिष्ठालक्षणम्.
२. स्नानकर्मविधिः.
३. अधिवासविधिः.
४. होमविधिः.
५. प्रतिष्ठाविधिः.
६. बलिविधिः.
७. सर्वस्नपनविधिः.
८. तीर्थयात्राकरणम्.
९. सर्वमन्त्रप्रकरणम्.
१०. तन्त्राधिकारविधिः.
११. प्रवाहनप्रवेशविधिः.
१२. जीर्णोद्धारसर्वप्रायश्चित्तविधिः.

### III. उभयभागे.

१. मङ्गलाङ्कुरविधिः.
२. यानप्रतिमादिग्रहणम्.
३. होमसाधनविधिः.
४. अग्निकार्यविधिः.
५. प्रतिष्ठालक्षणम्.
६. प्रासादपरिहोमविधिः.
७. महाबलिविधिः.
८. सर्वस्नपनविधिः.
९. तीर्थयात्राविधिः.
१०. प्रवहनविधिः.
११. कुम्भाधिवासनविधिः.
१२. प्रायश्चित्तविधिः.

IV. ब्रह्मभागे.

| | |
|---|---|
| १. प्रतिष्ठालक्षणम्. | ७. सर्वस्नपनविधिः. |
| २. सर्वलक्षणविधिः. | ८. महाबलिविधिः. |
| ३. नान्दीभोजनविधिः. | ९. स्नपनविधिः. |
| ४. सप्तनित्यबलिविधिः. | १०. तीर्थयात्राविधिः. |
| ५. जलवासादिविधिः. | ११. गर्भागारप्रमाणम्. |
| ६. वैश्वानरकार्यविधिः. | १२. कुम्भाधिवासादिविधिः |

**Beginning:**

आसीद्ग्रन्थो महानत्र धर्मकामार्थकारणात् ।
वर्णानां च हितार्थं तु देवा विष्णोस्सनातनात् ॥
क्षीरार्णवे महारम्ये नानारत्नसमावृते ।
देवदेवं नमः कृत्वा प्रणम्येदं तथैव च (तथोचिरे) ॥

देवदेव नमस्तेऽस्तु लोकनाथ नमोऽस्तु ते ।
तन्त्रं तु श्रोतुमिच्छामि(मो) देवदेव सनातन ॥
तन्त्रोत्पत्तिः कथं देव कथं तन्त्रन्तु(स्य) लक्षणम् ।
कस्मादुत्पद्यते तन्त्रं कति तन्त्राणि सन्ति च ॥
शिष्याश्चैव कति प्रोक्तास्तेषां नामानि मे वद ।
तन्त्राणां नामभेदं तु भूमिलक्षणमेव च ॥

* * * *

**Colophon:**

इत्यादिपुराणे प्रतिष्ठातन्त्रे देवोद्भवे शेषाधिकारविधिर्नाम द्वादश आश्वासः ॥

इति शिवभागस्समाप्तः ॥

* * * *

**Colophon:**

इत्यादिपुराणे प्रतिष्ठातन्त्रे विष्णुभागे देवोद्भवे सर्वप्रायश्चित्तविधिर्नाम द्वादश आश्वासः ॥

विष्णुभागस्समाप्तः ॥

* * * *

**Colophon:**

इत्यादिपुराणे प्रतिष्ठातन्त्रे उभयभागे देवोद्भवे प्रायश्चित्तविधिर्नाम द्वादश आश्वासः ॥

उभयभागस्समाप्तः ॥

**End:**

होमं च पूर्ववत्कुर्यात् सर्वमुक्तवदाचरेत् ।
न कश्चित्प्रविशेद्देहे गर्भागारं ध्रुवं विभो ॥
प्रविशेद्यदि तं मोहात् प्रायश्चित्तं भविष्यति ।
एक एव प्रविश्याथ अर्चयेत्तं चतुर्मुखम् ॥
सदार्चना प्रयोक्तव्या ब्रह्मणे नात्र संशयः ।
एतत्सर्वं मयाख्यातं तव भागं तवाधुना ॥
सर्वशान्तिकरं ह्येतत्सर्वपापप्रणाशनम् ।
एवं करोति यो विद्वान् स याति परमं पदम् ॥

**Colophon:**

इत्यादिपुराणे प्रतिष्ठातन्त्रे ब्रह्मभागे कुम्भाधिवासनविधिर्नाम द्वादश आश्वासः ॥

इति ब्रह्मभागस्समाप्तः ॥

---

R. No. **4352.**

Paper. 10⅝ × 9⅞ inches. Foll. 142. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Manavikrama Anujan Kuññuṇṇi Raja of Padiññārekōvilagam, Calicut.

Foll. 141*b* and 142 are left blank.

**नामलिङ्गानुशासनम्, सुबोधिनीव्याख्यासहितम्.**

**NĀMALIṄGĀNUŚĀSANAM WITH THE COMMENTARY SUBŌDHINĪ.**

Same work as that described under R. Nos. 1847(*a*) and 2765 *ante*. By Jātavēdadīkṣita, son of Yājñika Dēvaṇabhaṭṭōpādhyāya. This commentary is also called Bṛhadvṛtti.

Contains the first Kāṇḍa complete and breaks off in the Vanauṣadhivarga of the second Kāṇḍa.

R. No. **4353.**

**Paper.** 10⅝ × 9⅝ inches. **Foll.** 221. **Lines,** 20 in a page. **Dēvanāgarī.** Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Mānavēda Anujan Raja of Pudiyakōvilagam, Calicut, Malabar district.

**ईश्वरप्रत्यभिज्ञाविमर्शिनीव्याख्या.**

ĪŚVARAPRATYABHIJÑĀVIMARŚINĪVYĀKHYĀ.

Bonnd in two volumes.

A commentary on Abhinavagupta's Īśvarapratyabhijñāvimarśinī, which work has been described under R. No. 2696 ante.

Complete.

**Beginning :**

नामरूपात्मकं विश्वं यस्य लीलायितं वपुः ।
प्रकाशाय नमस्तस्मै सविमर्शाय शम्भवे ॥

इह विश्वानुजिघृक्षापरः परमशिव एव सकलभूमण्डलोत्तरे श्रीमच्छारदादिव्यक्रीडासदने श्रीकाश्मीरदेशे श्रीनरसिंहगुप्तसहधर्मचारिण्यां श्रीमत्यां विमलायां लीलयावतीर्य श्रीमदभिनवगुप्तनाथ इति प्रख्याताभिधानो निखिलरहस्याम्नायसारभूतं श्रीत्रैयम्बकसन्तानचूडामणिश्रीमुदुत्पलदेवाचार्यमुखोद्गीतं श्रीमदीश्वरप्रत्यभिज्ञाख्यं शास्त्रं व्याचिख्यासुः स्वव्याख्यानस्य निष्प्रत्यूहपरिपूरणाय तच्छास्त्रसारभूतां परां देवतां समाविश्यानुग्राह्यजनसमावेशार्थं स्तुतिपरामर्शपूर्वमभिमुखीकरोति—निराशंसादित्यादिना । यत् अहमिति पूर्णान्निराशंसात् उन्मेषप्रसरणनिमेषस्थितिजुष स्वरूपात् निजकलां पुरा द्विशाखामाभासयति । तदनु तामेव विभङ्क्तुमाशास्ते च । तत् परमशिवशक्त्यात्मनिखिलमद्वैतं वन्दे इत्यन्वयः । यत् किल श्रीत्रिंशिकाशास्त्रे

अनुत्तरं कथं देव सद्यः कौलिकसिद्धिदम् ।
येन विज्ञातमात्रेण खेचरीसमतां व्रजेत् ॥

* * * *

तस्यैव सर्वसिद्धिविभूतिसमुदयत्वमुपवर्णितम् । एवमनुत्तरभट्टारिकात्मकपरभैरवयामलवाचकीभूतं महाफलप्रदं हृदयबीजमस्मिन् ।

* * * *

आह्निकान्ते शिवशब्दप्रयोगो मङ्गलार्थः । यदुक्तं श्रीपातञ्जलभाष्ये—मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्त इत्यादि । इति शिवम् ॥

**Colophon :**

इति श्रीप्रत्यभिज्ञासूत्रविमर्शिनीव्याख्यायां प्रथममाह्निकम् ॥

**End :**

अहमिति । प्रथमानमात्मानं ज्ञानक्रियात्मकशक्तिप्रत्यभिज्ञानेनेश्वरात्मकमनभिज्ञायान्यत् वाक्यप्रमाणादिशास्त्रं विवेक्तुमिच्छति । तेन भूताविष्टसमानेन स्वरूपप्रच्छादनात्मकमायाभूताविष्टेन को भवानिति प्रश्ने किं वाच्यं न किमपीत्यर्थः । यथा—चैत्रो भूताविष्टः स्वपित्रादिना सङ्केतितं स्वनामधेयं न जानाति तद्वत् महामायाभूताविष्ट आत्मन आदिसिद्धं महेश्वरं न जानातीत्यर्थः ॥

**Colophon :**

इति श्रीप्रत्यभिज्ञासूत्रविमर्शिनीव्याख्या समाप्ता ॥

ज्ञानक्रियात्मनि सुखात्मनि निर्विकल्पे मायाविकल्पितविचित्रभवप्रपञ्चे ।
विद्याविलीनसकले विमले सुपूर्णे त्वय्येव मे शिवशिवास्तु सदानुभूतिः ॥

इति शिवम् ॥

---

R. No. **4354.**

Paper. 10⅝ × 9⅝ inches. Foll. 104. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Nārāyaṇa Numbūdirippāḍ, Pummilli-mana, Chalasseri post, Malabar district.

Fol. 104 is left blank.

**ऋग्वेदब्राह्मणभाष्यम्.**

ṚGVĒDABRĀHMAṆABHĀṢYAM.

A commentary on the Ṛgvēdabrāhmana, which work has been described under No. 33 of the D.C.S. MSS., Vol. I, Part I : by Bhaṭṭabhāskarayajvan.

Contains the Adhyāyas 1, 2 and 6—14 only, but wants the beginning of the first and sixth Adhyāyas.

**Beginning:**

प्रकृतापेक्षत्वात् सौमिक्यो देवताः । परिशंसनभाजोरग्राविष्ण्वोः प्रधान-देवतामध्यपातिन्यः इति । अत्र चोद्यम्—यस्मादेकादशकपालः पुरोडाशो द्वावग्राविष्णू ; तत् कथं कल्पनमनुष्ठानम् ? घृतनिर्वापः स्त्रियै पयश्शो-णितं पुंसः पयो रेतः ब्राह्मणस्येष्टिपूर्वत्वं सोमपूर्वत्वं वा विकल्प ।

* * * *

**Colophon:**

इति भट्टभास्कर(यज्व)विरचिते ऋग्वेदब्राह्मणभाष्ये प्रथमस्याध्यायस्य षष्ठः खण्डः ॥ प्रथमाध्यायस्समाप्तः ॥

* * * *

**Colophon:**

इति भट्टभास्कर(यज्व)विरचिते, ऋग्वेदब्राह्मणभाष्ये द्वितीयस्याध्यायस्य पञ्चमः खण्डः । द्वितीयश्चाध्यायस्समाप्तः ॥

* * * *

इलामुपह्वयत इत्यादि सुबोधं पश्चिलाविति रथं दधाति । पदावृत्तिरध्याय-परिसमाप्तिसूचनार्था ॥

दशमः खण्डः ॥

**Colophon:**

इति भट्टभास्करमिश्रयज्वविरचिते ऋग्वेदब्राह्मणभाष्ये षष्ठोऽध्याय-स्समाप्तः ॥

**End:**

अथ यस्माच्च खलु इदं तृतीयसवने सन्त्वरमाणाः व्यग्राश्चरन्ति ; तस्मात् खल्विदं प्रत्यश्चि प्रत्यग्देशसम्बन्धीनि दीर्घारण्या विदुषः फलम् । एतस्य हेति हशब्दश्चार्थे । गतमन्यत् । अध्यायसमाप्तिसूचनाथा द्विरुक्तिः ॥

**Colophon:**

षष्ठः खण्डः ॥

इति भट्टभास्करमिश्रयज्वविरचिते ऋग्वेदब्राह्मणभाष्ये चतुर्दशोऽ-ध्यायः ॥

R. No. 4355.

Paper. 10⅜ × 9⅝ inches. Foll. 66. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M R.Ry. Nārāyaṇa Nambūdirippāḍ, Pummilli-mana, Chalasseri post, Malabar district.

उणादिसूत्रवृत्तिः.

UṆĀDISŪTRAVṚTTIḤ.

Foll. 1*a*—63*b*.

Similar to the work described under No. 1268 of the D.C.S. MSS., Vol. III. By Śvētavanavāsin, son of Āryabhaṭṭa of Gargagōtra and Uttaramēru village.

The author lived in a small village near Indugrāma in the Chingleput district.

Complete.

**Beginning:**

प्रणम्य भाष्यकाराय तन्म(मे)स्पर्शशोभिताम् ।
व्याख्यामुणादितन्त्रस्य करिष्यामि यथाविधि ॥

कृपावाजिमिस्वदिसाध्यशूभ्य उण्—डु कृञ् करणे, पा पाने, लुग्विकरणालुग्विकरणयोर्लु(रलु)ग्विकरणस्यैवेति परिभाषया पिबतेरेव ग्रहणम्; लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणमिति

* * * *

एतेभ्य उण् प्रत्ययः णकारो वृद्ध्यर्थः । युगर्थ इव उणादिप्रत्ययान्ताःस्संज्ञाशब्दास्तेषामत्र स्वरूपसंवेदनस्वरवर्णानुपूर्वीमात्रफलमन्वाख्यानम् । अत एवाचार्यः पाणिनिः प्रतिपदविधानमनादृत्य लक्षणमेतत्सर्वसंग्राह्यं पठति स्म—उणादयो बहुलमिति ।

* * * *

**Colophon:**

इतीन्दुग्रामसम(मीप)वर्त्यग्रहारवास्तव्येनोत्तरमेव्य(वे)भिजनेन धर्मशास्त्रपारगार्यभट्टसूनुना गार्ग्येण श्वेतवनवासिनाम्ना विरचितायामुणादिवृत्तौ प्रथमः पादः ॥

**End:**

मङ्गेरलच्—अहि(गि)वहि(गि)महि(गि)गत्यर्थाः । मङ्गेरलच् प्रत्ययः । चकारः स्वरार्थः । मङ्गलम् ।

**Colophon:**

इतीन्दुग्रामसमीपवर्त्यग्रहारवास्तव्येन उत्तरमेवंभिजनेन धर्मशास्त्रपारगार्य- भट्टसूनुना गार्ग्येण श्वेतवनवासिनाम्ना विरचितायामुणादिवृत्तौ पञ्चमः पादः ॥

Foll. 64*a*—65*a* contain the Nipātasūtras Foll. 65*b* and 66 are left blank.

---

## R. No. 4356.

Paper. 10⅝ × 9¾ inches. Foll. 20. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923-24 from a MS. of Raja of Chirakkal, Malabar district.

Fol. 20*b* gives the name of the owner of the original MS.

सङ्ग्रहरामायणम्.

SAṄGRAHARĀMĀYAṆAM.

Same work as that described under R. No. 418 ante. By Nārāyaṇapaṇḍita, son of Trivikramapaṇḍita.

Contains the Sundarakāṇḍa complete.

---

## R. No. 4357.

Paper. 10¾ × 9⅞ inches. Foll. 130. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Aḻagācāriyar, Srivilliputtur, Ramnad district.

Fol. 130*b* gives the name of the owner of the original MS.

वेदान्तकण्टकोद्धारः.

VĒDĀNTAKAṆṬAKŌDDHĀRAḤ.

Same work as that described under No. 5004 of the D.C.S. MSS., Vol. X. By Campakēśārya, son of Varadācārya of Kauśikagōtra and of Tōḻappar family.

This is copied in continuation of the MS. described under No. 5004 of the D.C.S. MSS., Vol. X.

Wants the beginning and the end.

---

## R. No. 4358.

Paper. 10⅝ × 9¾ inches. Foll. 32. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Vāsudēva Sōmayājippāḍ, Vilayur, Malabar district.

Foll. 31 and 32 are left blank.

बृहतीव्याख्या—ऋजुविमलापञ्जिका.

BṚHATĪVYĀKHYĀ : ṚJUVIMALĀPAÑJIKĀ.

Same work as that described under R. Nos. 2682, 3293 and 3770 ante. By Śālikanātha.

Contains the first Pāda of the second Adhyāya incomplete.

---

R. No. **4359.**

Paper. 10⅝ × 9½ inches. Foll. 100. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Śrīkumāran Numbūdirippāḍ, Kattumadam-mana, Antakota post, Malabar district.

Fol. 100*b* is left blank.

बृहतीव्याख्या—ऋजुविमलापञ्जिका.

BṚHATĪVYĀKHYĀ : ṚJUVIMALĀPAÑJIKĀ.

Same work as that described under R. Nos. 2682, 3293 and 3770 ante. By Śālikanātha.

Contains from the third Pāda of the third Adhyāya to the end of the same Adhyāya.

---

R. No. **4360.**

Paper. 10⅝ × 9½ inches. Foll. 68. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. belonging to the Dēśamaṅgalam Manakkal, near Shornur, Malabar district.

Fol. 68*b* is left blank.

प्रक्रियासारः.

PRAKRIYĀSĀRAḤ.

A grammatical treatise like the Rūpāvatāra based on Pāṇini's Aṣṭādhyāyīsūtras.

Contains the Paricchēdas 1—10 complete.

**Beginning :**

गजाननं गिरां देवीं व्यासं कंसहरं गुरून् ।
भूतेशमीशमाशासितार्थदान् प्रणमाम्यहम् ॥
व्युत्पादयितुमल्पेन ग्रन्थेनाल्पधियं मया ।
विलिख्यते प्रक्रियायां सारं(रो) नारायणाश्रयात् ॥

इहादौ प्रत्याहारोक्तचैतत्सूत्राण्युच्यन्ते—अ इ उण् । ऋलृक् । ए ओङ् । ऐ औच् । हयवरट् । लण् । ञमङणनम् । झ भञ् । घढधष् । जबगडदश् । ख फ छ ठ थ चटतव् । कपय् । शषसर् । हल्—इति । इहागमादेशधातुगणपाठप्रत्ययप्रत्याहारसूत्राण्युपदेशाः । उपदेशेऽजनुनासिक इत् इत्यधिकारे हलन्त्यम्—उपदेशेऽन्त्यं हलित्संज्ञं स्यात् । इति णकारस्येत्संज्ञा ।

* * * *

**Colophon :**

इति प्रक्रियासारे संज्ञापरिच्छेदः ॥

**End :**

धातोरित्युक्तेः क्यङ् । कृष्णायते । कृष्ण . . भव . . . . . .

. . स्मिन् मे हरिस्तेऽथ्यः स्मृत्या तन्नामकीर्तनैः ।

मद्वीशु . . . . . . . . मन्यद्तोऽस्तु वा ॥

रूपावतारसूत्राणां व्य . . . . . . . . ।

(गु)रुपादाब्जकृपया समक्षेपि परं मया ॥

**Colophon :**

इति प्रक्रियासारे (सनाद्यन्त)परिच्छेदः (दशमः) ॥

संज्ञासन्धिसुबर्थास्सुब्विधिस्त्रीप्रत्ययाः (तथा) ।

(कृत्तद्धित)समासास्तिङ्सनाद्यन्ताः प्रदर्शिताः ॥

---

R. No. **4961.**

**Paper.** 10⅝ × 9½ inches. **Foll.** 72. **Lines,** 20 in a page. **Dēvanāgarī. Good.**

Transcribed in 1923–24 from a MS. of M.R.Ry. Mānavēda Anujan Kuññuṇṇi Rāja, Padiññāre-kōvilagam, Chalapuram, Calicut.

Fol. 27*b* is left blank.

रघुवंशव्याख्या—पदार्थदीपिका.

RAGHUVAMŚAVYĀKHYĀ : PADĀRTHADĪPIKĀ.

Same work as that described under R. No. 1854(*a*) ante, wherein see for the beginning. By Nārāyaṇa, pupil of Kṛṣṇa.

Contains the Sargas 7—11 complete and breaks off in the course of the 12th Sarga.

**End :**

कुवलयितगवाक्षां कुवलयिताः सञ्जातकुवलया गवाक्षा यस्याम् । उत्प्रेक्षा-गर्भा चेयमुक्तिः ॥

**Colophon :**

इति श्रीकृष्णशिष्यस्य नारायण(स्य) कृतौ रघुवंशव्याख्यायां पदार्थदीपिकायामेकादशस्सर्गः ॥

अथ पूर्वसर्गोपक्षिप्तं दैवकार्यं सनिदानं वक्तुमुपक्रमते—निर्विष्टेति । आसन्ननिर्वाणः दशरथः आसन्न(न्नं) निर्वाणो(णं) नाशो यस्य; निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने—इति यादवः । उषसि प्रदीपार्चिः इव ज्वालाविशेषणमुभयत्र योजनीयम् । निर्विष्ट उपभुक्तः विषयेषु शब्दादिषु स्नेहो रागो येन ।

* * * *

कुम्भेति । कपीन्द्रेण स्वसुः तुल्यावस्थः कृतः कुम्भकर्णः रामं रुरोध । कपीन्द्रस्सुग्रीवः । तेन स्वसुः शूर्पणखायास्तुल्या समानावस्था यस्य; कर्ण-नासिकाच्छेदेन शूर्पणखासाम्यं नीतः कुम्भकर्णो राममासस्सादेत्यर्थः ॥

---

R. No. **4362.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 86. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Śaṅkarasubbu Śastrigal, Tiruchendur, Tinnevelly district.

Fol. 86*b* gives the name of the owner of the original MS.

ब्रह्मविन्निधिः.

BRAHMAVINNIDHIḤ.

A treatise on Advaita-Vēdanta dealing with the following Prakaraṇas :—

१. गुरुदेवतामङ्गलम्.
२. जगन्मिथ्यात्वचिन्तनम्.
३. गुरुवरणम्.
४. शिष्याधिकारसम्पत्कथनम्.
५ गुरुशास्त्रपारम्पर्यक्रमकथनम्.
६. महावाक्यार्थविचारशास्त्रकथनम्.
७. खेचरीमुद्रावश्यकताकथनम्.

The author Vēṅkaṭayōgin of Gaṇṇēpūḍi village was the son of Subbayāmātya, who was the son of Kōdaṇḍaya and disciple of Svayaṁprakāśēndra who was the disciple of Rāmacandrayōgin.

Complete in 33 Prakaraṇas.

**Beginning:**

श्रीरामचन्द्रयोगीन्द्रं स्वप्रकाशगुरुं शिवम् ।
स्मरामि तत्पदद्वन्द्वं भजामि श्रेयसे चिरम् ॥

श्रीरामचन्द्रयोगीन्द्रशिष्यमस्मद्गुरुं भजे ।
स्वप्रकाशमुनिं यस्य ध्यानात्तद्वद्भवेत्पुमान् ॥

स्वयंप्रकाशयतिराड् जयत्यानन्दवारिधिः ।
यस्य सत्त्वोल्लसच्चित्तश्वेतद्वीपे वसेद्धरिः ॥

* * * * *

**Colophon:**

इति श्रीस्वयम्प्रकाशेन्द्रभगवत्पूज्यपादशिष्यसुब्बय्यामात्यपुत्रगन्नेपुड्या-दिवेङ्कटयोगिविरचिते ब्रह्मविनिधौ गुरुदेवतामङ्गलं नाम प्रथमं प्रकरणम् ॥

आदिवेङ्कटयोगीति शिष्यस्तस्य महात्मनः ।
प्रियश्च भगवद्भक्तपादसेवारतस्सुधीः ॥
गन्नेपुडिग्रामनामा भारद्वाजकुलाग्रणीः ।
कोदण्डय्याख्यस्य पौत्रस्सुब्बय्यामात्यपुत्रकः ॥

कृतसङ्गस्सदा सत्सु मृदुवाक्छीलवान् शुचिः ।
गुरुभक्तो दयालुश्च पितृसेवापरायणः ॥
तस्यासीदद्भुता काचिन्मतिरीशकटाक्षजा ।
जाजीलतायां यद्वत्स्यात्कालात्पुष्पोद्गमस्तथा ॥

कोऽयं लोकेश्वरः कः स्याद्भेदः कथमेतयोः ।
कस्माज्जगदिदं जातं कः कर्ता कुत्र तिष्ठति ॥
केन मुक्तो भवेज्जन्तुर्मिथ्याभूतं कथं जगत् ।

* * * *

**Colophon :**

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीस्वयम्प्रकाशेन्द्रभगवत्पूज्यपाद-शिष्यसुब्बय्यामात्यपुत्रगन्नेपुड्यादिवेङ्कटयोगिविरचिते ब्रह्मविन्निधौ जगन्मिथ्यात्वचिन्तन नाम द्वितीयं प्रकरणम् ॥

**End :**

मूलाविद्यानिवृत्तिश्च जीवत्वारोपसङ्क्षयः ॥
जीवन्मुक्तिफलं चात्र मुक्तिरन्ते फलं भवेत् ।
पठितव्यं ततस्सम्यगयं ग्रन्थो मुमुक्षुभिः ॥
जयत्वच्युतभक्तिस्सा मुद्रा जयतु खेचरी ।
ज्ञानयोगश्च जयतु जयतां मे गुरोः पदौ ॥

**Colophon :**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीस्वयम्प्रकाशेन्द्रभगवत्पूज्यपादशिष्य-सुब्बय्यामात्यपुत्रगन्नेपुड्यादिवेङ्कटयोगिविरचिते ब्रह्मविन्निधौ अधिकारिफलनिरूपणं नाम त्रयस्त्रिंशत्प्रकरणम् ॥

## R. No. 4363.

**Paper.** $10\frac{5}{8} \times 9\frac{1}{2}$ inches. **Foll.** 200. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS of M R Ry Śrīkumāra Numbūdirippāḍ, Kallit-mana, Shornur post, Malabar district.

Fol. 131*b* is left blank.

### मीमांसानयविवेकव्याख्यानम्—विवेकतत्त्वम्.

### MĪMĀṀSĀNAYAVIVĒKAVYĀKHYĀNAM : VIVĒKATATTVAM

A commentary on Bhavanātha's Mīmāṁsānayavivēka, which work has been described under R. No. 1786 ante : by Ravidēva.

Contains the first three Pādas only in the first Adhyāya.

**Beginning:**

संसिद्धगुरुभावस्य भवस्य पदगोचरे ।
निवेशयन् वाङ्मनसे सुकृती स्यामहं चिरम् ॥
ग्रन्थेऽल्पे विततेऽर्थे व्याख्या नो चेच्छ्रुतैषिणः केचित् ।
गुरुकुल एव जरेयुश्श्रुतमर्थं विस्मरेयुर्वा ॥

ननु गणाधिपं ग्रहान् वन्द इत्येतद्वाचिकवन्दनं किं स्वार्थं क्रियते उत परज्ञापनार्थं किमुभयथापीति चेत् स्वार्थवन्दनत्वेऽन्यं प्रति ज्ञापकत्वाभावात् किमर्थमिति तस्यापेक्षाभावात् अपेक्षिततत्समर्पकतया कर्तुं गुरुनये कृति-त्यस्यानन्वयापत्तिः । ज्ञापकत्वपक्षे ज्ञापनानर्थक्यम् ।

* * * *

गुरुग्रन्थस्य बहुमुखतया गत्यन्तरानर्हत्वेऽपि शालिकोक्तगत्यभिमुखत्वा-च्छिष्याणां तदपेक्षितार्थानुपपत्तिपरिहारार्थोऽयं यत्नः इति युक्तं तत्त्वमात्रविषयत्वमित्याह—महता प्रणिधानेनेति । सौन्दर्यादिविरहे ग्रन्थापरिग्रहशङ्कां निरस्यति— ग्रन्थेऽस्मिन्निति । विस्मयश्शुश्रूषा सा भवत्येवेत्यभिप्रायः ।

* * * *

**Colophon:**

इति रविदेवकृते विवेकतत्त्वे प्रथमस्याध्यायस्य प्रथमः पादः ॥

**End:**

क्रियान्वयिव्यक्त्यर्थत्वोपगमे पौरुषेयत्वापत्तिरवर्जनीयेति परिहरति—न चाकृत्युपलक्षणादिति । एतदधिकरणस्याकृतिग्रन्थे शेषतोक्त्या स्पष्टीकृतं

चैतद्भाष्यकारेणेत्याह - अत एवेति । नन्वेवं तत्स्थान एवास्याप्यधिकरण-स्यारम्भः स्यादित्याशङ्क्यात्रैवास्य सङ्गतिरित्याह—इह तु व्यक्तेरिति ॥

**Colophon:**

इति रविणा कृते विवेकतत्त्वे प्रथमस्याध्यायस्य तृतीयः पादः ॥

---

R. No. **4364.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 102. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS of M.R.Ry. Narayana Nambūdirippāḍ, Kūtalūr-mana, Nareri, Tritala, Malabar district.

Fol. 102 is left blank.

मीमांसानयविवेकव्याख्यानम्—विवेकतत्त्वम्

MĪMĀṀSĀNAYAVIVEKAVYĀKHYĀNAM : VIVĒKATATTVAM.

Same work as that described under R. No 4363 ante, wherein see for the beginning. By Ravidēva.

Contains the first three Pādas complete, and a small portion in the beginning of the fourth Pāda, fifth Pāda (wants the beginning) and the sixth Pada (wants the end) in the third Adhyaya.

**End:**

उक्तोपजीवनेन सङ्गतं पूर्वपक्षं चाह—उक्तेऽन्यर्थ इति । नन्वमीमामाधानविधेः प्राक् स्वरूपासिद्धेरपि नियोगात्तन्मुखेन क्रत्वर्थमाधानस्यासिद्धमिति पर्णतादिवैषम्या —

---

R. No. **4365.**

Paper. $10\frac{5}{8} \times 9\frac{1}{4}$ inches. Foll. 150. Lines, 20 in a page. Grantha and Tamil. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. T. S. Śrīnivāsacāriyār, Srirangam, Trichinopoly district.

देशिकसिद्धान्तरहस्यम्.

DĒŚIKASIDDHĀNTARAHASYAM.

A treatise on Viśiṣṭādvaita-Vēdānta dealing with the following topics :—

१. श्रुतिप्रक्रियाधिकारः.
२. उपबृंहणप्रक्रियाधिकारः.
३. अविरोधनिरूपणाधिकारः.
४. मुक्त्युपायत्वसमर्थनाधिकारः
५. सम्प्रदायपरिशोधनाधिकारः.

By Anantārya alias Nigamāntārya of Śrīvatsagotra
Complete.

**Beginning :**

श्रीमान् वेङ्कटनाथार्यः ( . . . ) सदा हृदि ॥
समाहारस्साम्नां प्रतिपदमृचां धाम यजुषां
लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।
कथादर्पक्षुभ्यत्कलिकथककोलाहलभवं
हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः ॥

श्रीवत्सवंशकलशोदधिपूर्णचन्द्रं श्रीसुन्दरार्यगुरुवर्यपदाब्जभृङ्गम् ।
श्रीश्रीनिवासगुरुसूनुमनर्घशीलं श्रीमत्पितामहगुरुं शरणं प्रपद्ये ॥

* * * *

श्रुतिस्मृतिगुरूक्तीनां बाधो यत्र न दृश्यते ।
घण्टावतारसिद्धान्तं विदुस्तं देशिकोत्तमाः ॥
अनन्तार्यदयागङ्गारसौघपरिपूरितम् ।
इदं देशिकसिद्धान्तरहस्यमिति कीर्त्यते ॥

अत्रेदं तत्त्वम्—

स्वशेषाशेषार्थो निरवधिकनिर्बाधमहिमा
फलानां दाता यः फलमपि च शारीरिकमितः ।
श्रियं तत्सध्रीचीं तदुपसदनत्रासशमनी-
मभिष्टौति स्तुत्यामवितथमतिर्यामुनमुनिः ॥

इत्यत्र शारीरकचतुरध्यायीसमधिगतं कारणत्वाद्यर्थचतुष्टयं यामुनाचार्याणामस्यां चतुश्श्लोक्यां नित्यं तद्धर्मधर्मिणीति वचनानुसाराल्लक्ष्म्यामतिदेशतः प्रतिपिपादयिषितमित्यभिप्रेत्यान्तर्नीतकारणत्वविभूतिद्वयशेषित्वाद्यर्थचतुष्टयस्य भगवन्निष्ठत्वमुपदेशरूपेण ज्ञापयन् ।

* * * *

**Colophon :**

इति श्रुतिप्रक्रियाधिकारः (प्रथमः) समाप्तः ॥

**End :**

तत्रोपादेयनामाणिकार्थान्तरसम्भावनया च सम्यङ्निरूपकैः प्रमाणैक-शरणैरेतत्परिग्राह्यमिति तत्तुष्टिपूर्वकं वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दन इति नृसिंहप्रीतये कृतिरित्येषा सफलेति ॥

**Colophon :**

इति निगमान्तार्यापरनामधेयस्य पितामहार्यस्य वात्स्यश्रीमदनन्तार्यस्य कृतिषु देशिकसिद्धान्तरहस्ये सम्प्रदायपरिशोधनाधिकारः पञ्चमः ॥

सम्पूर्णं च देशिकसिद्धान्तरहस्यम् ॥

---

R. No. **4366.**

Paper. $10\frac{5}{8} \times 9\frac{3}{4}$ inches. Foll. 261. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923–24 from a MS. belonging to the Sanskrit College Library, Tiruppanattura, Cochin State.

Fol. 131*b* is left blank

Bound in two volumes.

## महाभारतव्याख्या— लक्षालङ्कारः.
## MAHĀBHĀRATAVYĀKHYĀ : LAKṢĀLAṄKĀRAḤ.

A commentary on the Mahābharata, which work has been described under Nos. 1915—1957 of the D.C.S MSS., Vol. IV, Part I: by Vādirājatīrtha.

Contains the Ādiparvan, Udyōgaparvan, Bhīṣmaparvan and Ānuśāsanikaparvan complete.

**Beginning :**

व्यासायाप्रतिमेतिहासरचनोल्लासाय दुर्वादिनां
त्रासायासकराय सत्सु कृतविश्वासाय दोषद्विषे ।
भासा यामुनरम्यतोयसदृशायासायमासेविने
दासायाभयनाशिमध्वगुरुहृद्वासाय तुभ्यं नमः ॥
अगाधव्यासबोधाब्धौ निरूढाश्शब्दराशयः ।
न विवेचयितुं शक्यं मादृग्भिर्मन्दबुद्धिभिः ॥

प्रक्रान्तार्थानुसारेण शिक्षाशून्यपदस्यच ।
अर्थं कथञ्चिद्वक्ष्यामि तत्क्षन्तव्यं महात्माभिः ॥
योऽक्षरत्यागयोगाभ्यां क्षत्रं शूद्राभिधा व्यधात् ।
तस्य व्यासस्य वचसो वैदग्धीं वेत्ति कः कविः ॥
नारायणस्य व्यासस्य मध्वस्य च कृपाबलात् ।
भारतस्य श्लोकलक्षालङ्कारः क्रियते मया ॥

रोमहर्षणपुत्र उग्रश्रवा इत्यत्र रोमहर्षणपुत्रपदेनानन्दजनककथाकथक-सूतपुत्रत्वोक्त्या सूतकथारूपस्यास्य ग्रन्थस्य सर्वेष्टदायकत्वं सूचितम् ।

* * * *

**Colophon :**

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां कवि-कुलतिलकवादिराजतीर्थपूज्यचरणविरचितायां लक्षालङ्काराख्यटीकायामादिपर्वणि पौष्ये[मे] पदार्थानुक्रमणं नाम प्रथमोऽध्यायः ॥

* * * *

**Colophon :**

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यामादिपर्वणि खाण्डववनदाहे वादिराजतीर्थपूज्यचरणविरचितटीकायां लक्षालङ्कारे द्विशत-तमोऽध्यायः ॥

आदिपर्व समाप्तम् ॥

**End :**

सावित्री ब्रह्मणस्तथेत्यत्र ब्रह्मणश्चतुर्मुखस्य सावित्री नाभिकमलात्प्रसव-कर्त्री मातेति नारायणस्य विशेषणम् ॥

**Colophon :**

इति शान्तिपर्वण्यानुशासनिके दानधर्मे देवर्षिकीर्तनं नाम त्रिषष्टि-द्विशततमोऽध्यायः ॥

इति युधिष्ठिरप्रवेशो नाम चतुष्षष्टिद्विशततमोऽध्यायः ॥

इति पञ्चषष्टिद्विशततमोऽध्यायः ॥

इति भीष्मस्वर्गारोहणं नाम षट्षष्टिद्विशततमोऽध्यायः समाप्तः ॥

आनुशासनिकं पर्व समाप्तम् ॥

## *R. No. 4367.

Paper. 10⅝ × 9¾ inches. Foll. 34. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. S. A. Rāmasvāmi Śāstrigaḷ, Gōvindarajapuram, Trichur, Cochin State.

### (a) बालभारतव्याख्या -- मनोहरा.

### BĀLABHĀRATAVYĀKHYĀ : MANŌHARĀ.

Foll. 1a—16b.

Same work as that described under Nos. 11611 and 11612 of the D.C.S. MSS., Vol. XX, wherein see for the end. By Sāḷva Timmadaṇḍanātha, Prime Minister of Kṛṣṇarāya, the King of the Karnāṭaka country. For other particulars regarding the genealogy of King Kṛṣṇarāya, see the extracts given below.

Contains the first Sarga incomplete.

**Beginning :**

वन्देमहि महीयांसमंसलम्बिजटाभरम् ।
यत्कङ्कणरणत्काररवश्शब्दानुशासनम् ॥

* * * *

आसीन्महीशश्शशिवंशरत्नं ययातिसूनुर्यदुनामधेयः ।
यदन्ववाये जगतां हिताय कृतावतारः पुरुषः पुराणः ॥
तद्वंशशुद्धाम्बुधिसम्भवानां विशुद्धिभाजां नृपमौक्तिकानाम् ।
नवोदयो नायकतामयासीत् तेजोनिधिस्तिम्मय ईश्वरेन्द्रः ॥
सरसाधिपतिः प्रतापभानुः नरसाधीशमजीजनत्कुमारम् ।
नरसाहसमुग्रसङ्गरोर्व्यां नरसामान्यतमं पुमांसमाद्यम् ॥
अग्रहीन्नरपतिः पतिव्रतारत्नमुत्पलदृशं स तिप्पमाम् ।
छागलाञ्छनवधूपमां शुभभ्रूकलामपि च नागलाम्बिकाम् ॥
तिप्पाम्बिका वीरनरसिंहरायमसूयत ।
यस्तुया(ला)पुरुषादीनि चक्रे दानानि षोडश ॥
नागाम्बिकागर्भपयःपयोधौ जातः कनत्कौस्तुभरत्नगर्भः ।
श्रीकृष्णरायः श्रितपारिजातो यथार्थनामा यदुवंशमौलिः ॥
आलानं रिपुदन्तिनामरिपशोर्यूपस्सभीकाध्वरे
रुद्रस्स्वान्तनिखातशङ्कुरुदितो दीपः प्रतापाङ्कुरः ।

पातालात्कुहनावराहमुखतो दंष्ट्राध्रुवैर्निर्गत-
श्श्रीकृष्णः क्षितिपं च भाति विजयस्तम्भः कलिङ्गाङ्गणे ॥
प्रतापरुद्रस्य गजाधिपस्य पुत्रीं पवित्रीकृतभूतधात्रीम् ।
प्रत्यग्रहीद्यः प्रकटप्रतापाद्भद्रां सुभद्रामिव पाण्डवेयम् (:) ॥

* * * *

तद्वंशप्रभव(महा)नृपालकानां
राज्यश्रीभरभरणोत्सुकाः प्रवीणाः ।
स्वायत्तीकृतनिखिलार्थनीतिविद्याः
कौण्डिन्यान्वयजनुषोऽभवन्नम(मा)त्याम् (:) ॥

विलासैरखाविजितोऽद्रिराजस्वान्तस्थरौप्याचलमन्दि(द्रि)राजः ।
नयेन यस्सद्भिरनन्दि राजस्स तेषु रूढोऽजनि नन्दिराजः(!) ॥
तस्य सूनुरभवन्महामतिर्दानशौर्यकरुणानिवासभूः ।
(राम)भूमिधवनीतिसम्पदां वेमराज इति मन्त्रिकुञ्जरः ॥
सोऽप्यशेषवसुधाधुरन्धरं राजनीतिकलनायुगन्धरम् ।
मन्त्रिशेखरमसूत राचयं विप्रसात्कृतसमस्तरैचयम् ॥

संज्ञेवारुणमम्बिकेव गिरिशं स्वाहेव वैश्वानरं
वाणीवाम्बुरुहासनं वनरुहावासेव नारायणम् ।
पौलोमीव दिवौकसामधिपतिं सीतेव रामं प्रियं
राचय्यं वरदाम्बिकाभजत तच्चिन्त(त्ता)नुकूला सती ॥
तस्यास्समभवन्पुत्रास्सर्वशास्त्रविशारदाः ।
दानशूरास्त्रयश्चादिपूरुषा इव भास्वराः ॥
साल्वतिम्ममहामात्यो गोविन्दो गुणभूषणः ।
सूरागस्सुरमन्त्रीश इति विश्रुतकीर्तयः ॥
अग्रजस्तेषु विख्यातस्साल्वतिम्मश्चमूपतिः ।
नृषु धर्मार्थकामेषु मूर्तिमानादिमो यथा ॥
सौजन्यस्य निदानमाद्यकवितासारस्य घण्टापथः
सङ्गीतस्य निवासभूः कुलगृहं धर्मस्य मूलं श्रुतेः ।
हेतुर्नीतिफलस्य केतुरररराडृबृन्दस्य सङ्ख्यावतां
जीवातुस्सचिवाग्रणीर्विजयते श्रीसाल्वतिम्मप्रभुः ॥

पद्मासौ पद्मसद्मेति सासूयेव सरस्वती ।
साल्वतिम्ममुखाम्भोजमध्यमध्यास्य नृत्यति ॥
बालभारतकाव्यस्य टीकां सर्वमनोहराम् ।
साल्वतिम्मचमूनाथो विधत्ते विदुषां मुदे ॥

स्यादेव मेऽलसतया मतिमान्द्यतो वा
दोषः क्वचित्क्वचिदथापि न कापि शङ्का ।
दोषोत्करस्य सुगुणीकरणे प्रवीणा
शक्त्य(क्ति)स्सदा विजयते खलु सज्जनानाम् ॥

अस्तीति—अत्रिर्नाम कश्चन ब्रह्मणो मानसः पुत्रः । तस्य नेत्रं नयनम्; लोचनं नयनं नेत्रमित्यमरः । प्रभवत्यस्मादिति प्रभवः कारणम्; ऋदोरप् इत्यप्प्रत्ययः; स्याज्जन्महेतुः प्रभव इत्यमरः । अत्रिनेत्रं प्रभवो यस्य सोऽत्रिनेत्रप्रभवः ।

---

(*b*) अभिज्ञानशाकुन्तलटिप्पणी.

ABHIJÑĀNAŚĀKUNTALAṬIPPAṆĪ.

Foll. 17*a*—33*b*. Fol. 34 is left blank.

A short commentary on Kālidāsa's Abhijñānaśākuntala, which work has been described under No. 12465 of the D.C.S. MSS., Vol. XXI.

Complete.

**Beginning:**

प्रणम्य वरदं कृष्णं यथामतिबलं मया ।
शाकुन्तलस्य नाट्यस्य व्याख्या किल विधीयते ॥
स्वयमेव सुबोधात्म्यान् प्रदेशान् परिवर्जयन् ।
अबोधस्य प्रदेशस्य करोत्यत्र प्रदर्शनम् ॥

(नान्द्यन्ते सूत्रधारः) नान्दीलक्षणं द्विधा दृश्यते—रङ्गपूजानान्दी, श्लोकनान्दी च ! रङ्गपूजानान्द्यास्स्वरूपमुक्तं भरतेन—

नन्दी वृषस्सोऽपि महेश्वरस्य रङ्गत्वमादौ किल खे जगाम ।
तद्रङ्गमुद्दिश्य कृता तु पूजा नान्दीति तन्नाट्यविदो वदन्ति ॥

इति ।

इह रङ्गपूजानान्दी कृतेति द्रष्टव्यम् । तदन्ते सूत्रधारो नाट्यविशारदो नटः रङ्गं प्रविश्याह—या सृष्टिः—इत्यादि । भगवतश्शम्भोरष्टमूर्तिस्वरूपनिर्देशेन प्रशंसति—स्रष्टुः ब्रह्मणः ।

**End:**

न खल्वस्य विषये विश्वसा(सि)मि । सम्भावनीयः श्लाघ्यः । एकान्तरमेकेन मरीचिना । शक्तिस्स्वयम्भूः ॥

**Colophon:**

इति शाकुन्तलव्याख्याने सप्तमोऽङ्कः ॥

शाकुन्तलव्याख्या समाप्ता ॥

---

R. No. **4368.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 10. Lines, 20 in a page Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Narayaṇa Nambūdirippāḍ, Kūtalūr-mana, Nareri, Tritala, Malabar district.

Fol. 10 is left blank.

दमयन्तीपरिणयचम्पूः.

DAMAYANTĪPARIṆAYACAMPŪḤ.

A work in prose and poetry, of the Campū kind, describing the marriage of Damayantī with Nala.

Wants the beginning and the end.

**Beginning:**

क्रमः सकलकलाकलापकुशलनवनवोन्मेषशेमुषीविशेषपरितोषिताशेषमनीषिपरिषदेकेन सितातपवारणेनानुदितसन्तापान् समस्तजनानाकलयन् पालयामास निखिलभूमण्डलम् ।

कथा—

विदर्भेष्वजनिष्ट कश्चित् क्षोणीपति . . . . .
लेभे तस्य महर्षेः प्रसादतो भीमनरपालः ॥
पुत्री विदर्भराजस्य वर्धते स्म दिने दिने ।
लक्ष्मीरिव क्षितिपतेर्नयेनोर्वी प्रशासतः ॥
सा विशिष्य तदपत्यचतुष्के प्रीतिदा पितुरभूद्दमयन्ती ।
मुक्तिरेव पुरुषार्थचतुष्के सम्मता ननु जनस्य विशेषात् ॥

* * * *

इति वदन्तीं दमयन्तीं स हंसराजः पुनर्व्याजहार । भैमि भवत्या मन्त्रोद्धाररीत्या भवदभिमतस्य यूनो नामधेयं प्राणायामं चिकीर्षोः शिरोवेष्टनया नासिकाग्रहणमिव आलपितम् । तं(तत्) नल इति नामधेयं कथितं भवति ।

**End:**

खमुत्पतन्नश्वखुरा(ग्रोत्थः)पांसुः पतित्वा सुरनिर्झरिण्याम् ।
तत्पङ्कजानां ननु नाम चक्रे व्युत्पन्नमासादितपङ्कभावः ॥

---

R. No. **4369.**

Paper. 10⅝ × 9½ inches. Foli. 22. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of Naduvil-maṭham, Trichur, Cochin State.

Fol. 22 is left blank.

## विनायकोदयः.
## VINĀYAKŌDAYAḤ.

Same work as that described under R. No. 3611(*b*) ante.

Wants the beginning in the first Paṭala and breaks off in the sixth Paṭala.

---

R. No. **4370.**

Paper. 10⅝ × 9¾ inches. Foll. 4. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Tirumalayyaṅgār, Srivilliputtur, Ramnad district.

Fol. 4*b* is left blank.

## श्लोकान्तादिः.
## ŚLŌKĀNTĀDIḤ.

Thirty-two stanzas in praise of Embārjīyar of Śrīperumbūdūr. The first syllables of these 32 stanzas, if read in succession, would make the Anuṣṭup stanza given at the beginning of the work.

Complete.

**Beginning:**

श्रीशैलरामावरजयतिराज पदाम्बुजे ।
तव वेदान्तविद्यायां रसिकोदार संश्रये ॥ अयमुद्धारश्लोकः ।

श्रीमान्नृसिंहमासेऽष्टमतिथिसहिते रोहिणीनामतारे
सम्भूतः श्रीजयन्त्यां यदुकुलतिलको विष्णुरुर्व्यां यथासौ ।
जीयाच्छ्रीशैलरामावरजयतिपतिः श्रीमहाभूतपुर्यां
गोविन्दाह्वानयोगीश्वरनिहितमना उज्झितो दुष्टपाशैः ॥

**End:**

श्रीशैलरामावरजयतिराज पदाम्बुजे ।
तव वेदान्तविद्यायां रसिकोदार संश्रये ॥

अयमन्तादिः अयं श्लोकाद्यक्षरघटितः ॥
श्रीशैलयोगिपतिराशैशवं समतिनाशैतत्परजनैस्त्यक्तस्य.

---

## R. No. 4371.

Paper 10⅝ × 9½ inches. Foll. 12. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Paliyattu Valiya Acchan, Sennamangalam, Parur post, Cochin State.

Fol. 12 is left blank.

### धातुपरिभाषा.

### DHĀTUPARIBHĀṢĀ.

Same work as that described under R. No. 3789 ante.

Incomplete.

---

## R. No. 4372.

Paper. 10⅝ × 9½ inches. Foll. 5. Lines, 20 in a page. Telugu. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Dēvulapalli Rāmakṛṣṇabrahma Śāstrigāru, Repalli, Guntur district.

### संहितारत्नाकरः.

### SAṀHITĀRATNĀKARAḤ.

Same work as that described under R. No. 2466 ante.

Incomplete.

R. No. **4373.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 10. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. K. C. Valiyarāja, Kottakal, Malabar district.

(*a*) यङ्लुक्सङ्ग्रहश्लोकव्याख्या.
YAṄLUKSAṄGRAHAŚLŌKAVYĀKHYĀ.

Foll. 1*a*—8*b*.

A commentary on the Yaṅluksaṅgrahaślōkas, which deal with the formation of frequentative forms of Sanskrit roots.

Complete.

**Beginning:**

प्रणिपत्य जगन्नाथं रामं राजीवलोचनम् ।
प्रक्रिया यङ्लुकः कैश्चित्पद्यैः किमपि गद्यते ॥
धातोर्हलादेरेकाचो यङ्प्रत्यय इह स्मृतः ।
क्रियासमभिहारेऽर्थे प्रत्ययेभ्यस्तथा पुनः ॥
कौटिल्ये भावगर्हायां लुपादेश्च यङः पुनः ।
यङोऽचि चेति तस्यास्य लुगपि प्रत्यये स्मृतः ॥
बहुलं छन्दसीति प्राक् प्रकृतं यत्पदद्वयम् ।
एतद्यङोऽचि चेत्यत्र चशब्देनानुकृष्यते ॥

* * * *

तथा च भाष्यकारेण हुश्नुग्रहणमेव तत् ।
भाषायां यङ्लुगस्तीति लिङ्गत्वेन समर्थितम् ॥
वृत्तिकारादयोऽप्यत्र तदेव मतमास्थिताः ।
अस्माभिरपि तन्नित्या प्रक्रियात्र प्रदर्श्यते ॥
प्रथमं तत्र भूधातुं प्रकृत्य प्रयतामहे ।
धातावित्यादिना धातोर्भवतेर्यङि तस्य तु ॥

**End:**

एवं यङ्लुकि सर्वत्र कार्या सूक्ष्मेक्षिका बुधैः ।
यो वेद यङ्लुकं सम्यक् स वैयाकरणाग्रणीः ॥
इत्येतद्भाष्यकारेण प्रशंसार्थं प्रदर्शितम् ।

*　　*　　*　　*

आहिताग्निगृहाख्येन शाब्दसिंहेन ये कृताः ।
यङ्लुकस्सङ्ग्रहश्लोकास्तद्याख्यैषा मया कृता ॥

**Colophon:**

इति समाप्तं चेदम् ॥

---

(b) गणपाठकारिका.
GAṆAPĀṬHAKĀRIKĀ.

Foll. 9a—10a. Fol. 10b is left blank.

A compendium in verse of the Gaṇapāṭha, which work has been described under No. 1270 of the D.C.S. MSS., Vol. III.

Contains the first Adhyāya complete.

**Beginning:**

जगत्सिसृक्षा प्रभु यत्क्रियाविधौ प्रयत्नमुन्मेषनिमेषलक्षणम् ।
पदक्रियस्येक्षणपद्मपक्ष्मणां पराय तस्मै परमेष्ठिने नमः ॥

त(ते)सभाम्बरसहस्ररश्मयो ये स्मरन्ति गणपाठमर्भकाः ।
संस्मृतिश्च न विनोपपद्यते वृत्तग्रन्थमिह पाणिनेरपि ॥

यथानुपूर्व्यं रचनाश्रुतौ सुखं करोति न व्यक्तमनादृता ततः ।
प्रयोजनाधीनतया क्वचित्क्वचित्क्रमस्समाश्रायि थथा त्यदादिषु ॥

भवति गौरवमत्र यथास्थिते सति गणे नियमान् पाठिते यतः ।
क्वचिदतोऽपरथा स निहन्यते न खलु वस्तुनि काचिदपि क्षतिः ॥

*　　*　　*　　*

सर्वं विश्वमुभोभयडतरडतमे(त)रान्यानि ।
अन्यतरव(त्वत्)त्वे नेम(सम)सिमं च पूर्वाद्याः ॥

त्यत्तद्यदेत(द)दसस्तथेदमेकद्वियुष्मदस्मच्च ।
भवतु किमित्येव मया सर्वादिगणोऽभ्यधायि बुधैः ॥

**End:**

साक्षान्मिथ्याचिन्ता द(भ)द्रामारो(लो)चनास्थ(श्र)द्धा ।
प्राजर्या प्राजरुहा बीजर्या स्मा(स्या)त्पाश्व(र्श्व)बीजरुहा ॥

संसर्पा(र्या)र्थे लवणं तथोष्णमथ शीतमुदकमात्रं(र्द्रं) च ।
अग्नौ वने(शे) विर(ह)सने विकम्पने वि(प्र)सह(हस)ने प्रतपने च ॥

प्र(।)दुर्विशे चासहने नमन्मूकि(स्सूक्ति)रिति स्मृता ।
साक्षादादिषु मान्तत्वं हे(ग)तिसंज्ञानिमित्तकम् ॥

**Colophon:**

इति प्रथमोऽध्यायः ॥

---

R. No. **4374.**

Paper. 10⅝ × 9½ inches. Foll. 1232. Lines, 20 in a page. Grantha. Good

Transcribed in 1923–24 from a MS. of the Raja of Ettiapuram, Tinnevelly district.

Bound in five volumes.

Foll. 407*b* and 408 are left blank.

शुक्रनाडी.

ŚUKRANĀḌĪ.

Same work as that described under Nos. 13902 and 13903 of the D.C.S. MSS., Vol. XXIV, and R. No. 4180 ante.

An index of the Lagnas together with the Aṁśas treated in these five volumes is given below with the corresponding folio noted against each Aṁśa and Lagna:—

Vol. I.

| | Foll. |
|---|---|
| वसुधांशम्, सिंहलग्नम् ... | 156a |
| शिवदांशम्, मकरलग्नम् ... | 160b |
| लक्ष्मीशांशम्, वृषभलग्नम् ... | 169a |
| त्रैलोक्यांशम्, मिथुनलग्नम् ... | 179b |
| शिवदांशम्, तुलालग्नम् ... | 188b |
| लक्ष्मीशांशम्, कुम्भलग्नम् ... | 199a |

Vol. II.

| | Foll. |
|---|---|
| वरदांशम्, सिंहलग्नम् ... | 213a |
| सुधांशम्, कन्यालग्नम् ... | 217a |
| वसुधांशम्, कटकलग्नम् ... | 220b |
| शाङ्कर्यंशम्, मकरलग्नम् .. | 228a |
| मङ्गलांशम्, कुम्भलग्नम् ... | 235b |
| पङ्कजांशम्, मिथुनलग्नम् ... | 244a |
| मैत्रांशम्, कन्यालग्नम् ... | 251b |
| सौम्यांशम्, मकरलग्नम् ... | 258a |
| कमलांशम्, वृषभलग्नम् ... | 264a |
| लक्ष्मीशांशम्, सिंहलग्नम् ... | 270b |
| वसुधांशम्, तुलालग्नम् ... | 275b |
| शिवदांशम्, Do. ... | 286b |
| पङ्कजांशम्, कुम्भलग्नम् ... | 296a |
| विक्रमांशम्, सिंहलग्नम् ... | 303b |
| मञ्जुलांशम्, चरलग्नम् ... | 309b |
| कन्दर्पांशम्, मकरलग्नम् ... | 318a |
| कमलांशम्, Do. ... | 324a |
| सुमनांशम्, वृश्चिकलग्नम् ... | 346b |
| सुधांशम्, मिथुनलग्नम् ... | 358a |
| शुभांशम्, धनुर्लग्नम् ... | 363a |
| सुधांशम्, तुलालग्नम् ... | 369a |
| धनदांशम्, वृषभलग्नम् ... | 375b |
| भाग्यांशम्, सिंहलग्नम् . | 384b |
| त्रैलोक्यांशम्, कन्यालग्नम् ... | 390a |
| मङ्गलांशम्, Do. ... | 401b |

Vol. III.

| | Foll. |
|---|---|
| सुधांशम्, सिंहलग्नम् ... | 409a |
| मुण्डांशम्, मीनलग्नम् ... | 412b |
| कुसुमांशम्, मेषलग्नम् ... | 418a |
| सुधांशम्, कटकलग्नम् ... | 426a |
| लक्ष्मीशांशम्, वृषभलग्नम् ... | 437a |
| ध्रुवांशम्, कटकलग्नम् ... | 444b |
| कालकूटांशम्, कन्यालग्नम् ... | 450b |
| गिरिजांशम्, मकरलग्नम् .. | 456b |
| वसुधांशम्, कटकलग्नम् ... | 461b |
| सारस्वतांशम्, Do. . | 475a |
| मायांशम्, वृश्चिकलग्नम् ... | 481a |
| सुप्रभांशम्, मकरलग्नम् ... | 491a |
| कमलांशम्, कुम्भलग्नम् ... | 499b |
| कान्तांशम्, कटकलग्नम् ... | 507a |
| चित्रिण्यंशम्, तुलालग्नम् ... | 512b |
| कालिकांशम्, मकरलग्नम् ... | 516a |
| वागीशांशम्, मिथुनलग्नम् ... | 525a |
| सुधांशम्, धनुर्लग्नम् ... | 528b |
| चम्पकांशम्, तुलालग्नम् ... | 535a |
| सुप्रभांशम्, कन्यालग्नम् ... | 540a |
| वसुधांशम्, कटकलग्नम् ... | 550b |
| सुप्रभांशम्, Do. ... | 558a |
| सुखदांशम्, मेषलग्नम् ... | 570a |

| Vol. III. | Foll. |
|---|---|
| श्रीधरांशम्, मकरलग्नम् ... | 574*a* |
| कमलांशम्, Do. ... | 577*a* |
| सुप्रभांशम्, धनुर्लग्नम् ... | 591*a* |
| कुमुदांशम्, Do. ... | 604*a* |
| त्रैलोक्यांशम्, कन्यालग्नम् ... | 610*b* |
| मञ्जुलांशम्, मिथुनलग्नम् .. | 624*a* |

| Vol. IV. | Foll. |
|---|---|
| कुम्भांशम्, तुलालग्नम् ... | 630*b* |
| सुधांशम्, धनुर्लग्नम् ... | 640*b* |
| सुमनांशम्, कुम्भलग्नम् ... | 647*a* |
| पङ्कजांशम्, सिंहलग्नम् ... | 652*b* |
| सुमत्यंशम्, वृश्चिकलग्नम् ... | 658*a* |
| गन्धर्वांशम्, मकरलग्नम् . | 664*b* |
| सुप्रभांशम्, धनुर्लग्नम् ... | 677*a* |
| शारदांशम्, सिंहलग्नम् ... | 684*a* |
| सुप्रभांशम्, तुलालग्नम् ... | 695*b* |
| पङ्कजांशम्, मेषलग्नम् ... | 704*b* |
| कुसुमांशम् or कमलांशम्, कन्यालग्नम्. | 716*a* |
| कुबेरांशम्, Do. ... | 721*b* |
| कमलांशम्, Do. ... | 729*a* |
| कुबेरांशम्, Do. ... | 747*b* |
| लक्ष्मीशांशम्, मकरलग्नम् ... | 764*b* |
| सुमनांशम्, धनुर्लग्नम् ... | 777*a* |
| सुप्रभांशम्, कन्यालग्नम् ... | 786*a* |
| सोमवल्ल्यंशम्, मेषलग्नम् ... | 793*a* |

| Vol. V. | Foll. |
|---|---|
| त्रैलोक्यांशम्, तुलालग्नम् ... | 804*a* |
| जगत्यंशम्, कन्यालग्नम् ... | 816*b* |
| मञ्जुलांशम्, मेषलग्नम् ... | 825*b* |
| विक्रमांशम्, कन्यालग्नम् ... | 831*a* |
| सुखदांशम्, सिंहलग्नम् ... | 835*a* |
| पारावतांशम्, कुम्भलग्नम् ... | 839*a* |
| मायांशम्, धनुर्लग्नम् ... | 846*a* |
| कुन्दांशम्, कटकलग्नम् ... | 850*a* |
| मङ्गलांशम्, वृषभलग्नम् ... | 853*a* |
| किन्नरांशम्, मकरलग्नम् ... | 856*b* |
| शुभांशम्, कटकलग्नम् ... | 866*a* |
| उरगांशम्, तुलालग्नम् ... | 871*a* |
| Do. सिंहलग्नम् ... | 876*b* |
| मुद्रिकांशम्, मकरलग्नम् ... | 883*a* |
| रमांशम्, कुम्भलग्नम् ... | 891*a* |
| किन्नरांशम्, Do. ... | 894*a* |
| ब्राह्म्यंशम्, धनुर्लग्नम् ... | 897*a* |
| कोकिलांशम्, Do. ... | 902*a* |
| पारिजातांशम्, कटकलग्नम् ... | 909*a* |
| लक्ष्मीशांशम्, Do. ... | 922*a* |
| शारदांशम्, कुम्भलग्नम् ... | 931*a* |
| सुधांशम्, कन्यालग्नम् ... | 939*b* |
| पङ्कजांशम्, सिंहलग्नम् ... | 943*a* |
| कमलांशम्, कुम्भलग्नम् ... | 951*b* |
| धनदांशम्, मीनलग्नम् ... | 960*b* |
| पारिजातांशम्, Do. ... | 967*b* |
| चम्पकांशम्, मिथुनलग्नम् . | 975*b* |
| सुप्रभांशम्, तुलालग्नम् ... | 979*a* |

| Vol. V. | Foll. | Vol. V. | Foll. |
|---|---|---|---|
| जगत्यंशम्, मीनलग्नम् | ... 987*a* | शिवदांशम्, सिंहलग्नम् | ... 1008*b* |
| वसुधांशम्, सिंहलग्नम् | ... 994*b* | सुखदांशम्, तुलालग्नम् | ... 1033*b* |
| सुधांशम्, मेषलग्नम् | ... 997*b* | सुमनांशम्, Do. | ... 1042*a* |
| वसुधांशम्, सिंहलग्नम् | ... 1000*b* | कुमुदांशम्, मेषलग्नम् | ... 1047*a* |
| कमलांशम्, Do. | ... 1003*b* | | |

---

## R. No. 4375.

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 412. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. belonging to Kadangussery-mana, Irinjalakkuda, Cochin State.

Bound in two volumes.

(*a*) वाधूलापरकल्पव्याख्या.

VĀDHŪLĀPARAKALPAVYĀKHYĀ.

Foll. 1*a*—14*b*.

A commentary on the Vādhūläparakalpa which is a treatise describing the procedure to be adopted in connexion with the performance of funeral ceremonies; this work is intended for the followers of Vādhūlasūtra.

Wants the beginning and the end.

**Beginning :**

फाल्गुनस्याथ यदि द्वे तैषस्य माघस्याथ यद्येकां माघस्यैव . . . . . . . . . . पतमभिक्लेशावहं पितॄणां साम्पराये देवेन सविता प्रसूता देवस्य त्वा—हस्ताभ्यां पितृभ्यो जुष्टं निर्वपामीत्यथैतान् प्रोक्षति पितृभ्यो वो जुष्टं प्रोक्षामि

* * * *

देव सवितः प्रासावीरिति समन्तं पिण्डानामावृतोदनस्य पिण्डान् ददात्यथैनमपूपमन्नमभिमृशति ।

**End:**

एकोद्दिष्टं कल्पयन्ननुकल्पयते केशश्मश्रुलोमनखानि वापयित्वा नवं पात्रमाज्यं तृणमुष्टिमञ्जनाभ्यञ्जने सूत्रमिति धनधान्यपात्रं दक्षिणामुखस्सकृदुपस्पृश्य स्नात्वा दक्षिणतः.

* * * *

गृहान् प्रविश्य सुस्नातः कृतमङ्गलो ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धि-मिति वाचयित्वान्नशेषं सगुणं प्रा.

---

(b) वाधूलश्रौतसूत्रम्.
VĀDHŪLAŚRAUTASŪTRAM.

Foll. 15*a*—412*a*. Fol. 412*b* is left blank.

Original Sūtras attributed to Vādhūla, dealing with the sacrificial rites intended for the followers of the Yajurvēda.

Complete.

**Beginning :**

(वागीशाद्यास्सुमनसस्सर्वा)र्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

अग्नीनाधास्यमानस्सम्भारान् सम्भरते । उषाश्च सिकताश्चाखूत्करं च सूदं च वराहविहितं च शर्कराश्च पुष्करपर्णं च षट् च हिरण्यशल्कां च शतमानं चेति.

* * * *

यजमानस्य व्रतधुक् पयस्यायै या पत्नियै तामाशिरे इति पञ्चदश नक्षत्राणि रात्रिं नयन्ति ॥

**Colophon :**

इति प्रथमः प्रश्नः ॥

* * * *

त्रीञ्छैशिरान् संवत्सरे पर्यागते संवत्सराय निवक्षस्सन्तिष्ठतेऽश्वमेध-स्सन्तिष्ठतेऽश्वमेधः ॥

**Colophon :**

इति नवमोऽनुवाकः ॥

अश्वमेधाख्यः प्रपाठकस्समाप्तः ॥

**End :**

अथ यद्यृते वसतीवरीकाणि दीर्येरन् वसतावरीभ्य आग्रयणं गृह्णीयादा-ग्रयणादितरेभ्योऽभिप्रस्कन्दयति समानो होमस्समानो मन्त्रोऽनुपूर्वं पुरोरुच-

स्सꣳस्थापयति पुनर्यज्ञ एवाथ यदि वसतीवरीकाणि दीर्येरन् यत्र वसती-
वरीकाणिं दीर्येरंस्ततो मृत्पिण्डमवधाय पुनर्वसतीवरीर्गृह्णीयाद्वसतीवरीभ्य आग्र-
यणं गृह्णीयादाग्रयणादितरेभ्योऽधिप्रस्कन्दयति समानो होमस्समानो मन्त्रोऽ-
नुपूर्वं पुरो रुचस्सꣳस्थापयति पुनर्यज्ञ एव ॥

**Colophon:**

इति वाधूलगृह्य(श्रौत)कल्पस्समाप्तः ॥

---

R. No. **4376.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 46. Lines, 20 in a page. Dēvanāgarī. Good

Transcribed in 1923–24 from a MS. of the Trivandrum Library, Trivandrum, Travancore.

(*a*) स्फोटसिद्धिः.

SPHŌṬASIDDHIḤ.

Foll. 1*a*—21*a*.

A treatise expounding and maintaining the doctrine of Sphōṭa: by Maṇḍana. A commentary on this work by Paramēśvara (son of Ṛṣi and Gōpālikā, pupil of Bhavadāsa who was the brother of Ṛṣi), has been described under R. No. 3966 ante.

Complete.

**Beginning:**

योगदान्तैकदृश्यात्मा यो गदान्तकरो नृणाम् ।
तत्त्वावस्थाणवे तस्मै तत्त्वावस्थाणवे नमः ॥
दुर्विदग्धैरप(व)क्षिप्ते दर्शने पददर्शिनाम् ।
यथाक्रमं यथाप्रज्ञं न्यायलेशो निदर्श्यते ॥

किं पुनरिदंनाम शब्दः, कः पुनरिह शब्दोऽभिप्रेतः? वर्णाः, नेत्याह—

अर्थाव(सा)यप्रसवनिमित्तं शब्द इष्यते । यथोक्तं—येनोच्चारितेने-
त्यादि । नन्वेवं धूमादयोऽपि धूमकेतनादिप्रत्ययो[क्षया]पदर्शितसामर्थ्याति-
शयाश्शब्दतामश्नुवीरन् । तथैकैकवर्णाश्च तद्विधर्मतया न तथा व्यपदिश्ये-
रन् । अन्योऽपिवावाचकस्सङ्गतिसंवेदनसये(मय)तश्च पुरश्श्रवणेन्द्रियाव-
सेयोऽपि न शब्द इति निगद्येत, पश्चाच्च तथोच्येत । तत्र गौरित्येष शब्दो-
ऽशब्दश्चापद्येत । न चेदं चतुरश्रम् ।

**End:**

यदि तावत् वर्णग्रहणसामर्थ्य(पेक्ष)त्वात् काल्पनिकः परप्रत्यय इति जात्यादि[प्रत्ययादि]प्रत्यया अपि कल्पना(नी)याः स्युरिति जात्यादीनां परमार्थसत्त्वं हीयेत । अर्थग्रहणसापेक्षत्वे च दर्शितमितरेतराश्रयत्वं, ततः सर्वं मनोहरम् ॥

निरस्तभेदं पदतत्त्वमेतत् व्यादर्शि युक्त्यागमसंश्रयेण ।
विधूतभेदग्रहमेतयैव दिशा परं सम्प्रतियन्तु(न्त्व)भेदम् ॥
सान्द्राविद्यातिमिरपटलाच्छादितान्तर्दृशो ये
दृष्टं(ष्टिं)मन्दा प(व)रमुनिमते कुर्वते सावमानम् ।
तेभ्योऽविद्यातिमिरपटलोल्लेखिनी संहितेयं
स्पष्टन्यायैर्घटितसुमतिर्दर्शिता स्फोटसिद्धिः ॥

**Colophon:**

इति मण्डनमिश्राणां कृतिः स्फोटसिद्धिस्समाप्ता ॥

---

(*b*) **स्फोटसिद्धिकारिका.**

SPHŌṬASIDDHIKĀRIKĀ.

Foll. 21*a*—23*a*. Fol. 23*b* is left blank.

Complete.

**Beginning:**

दुर्विदग्धैरप(व)क्षिप्ते दर्शने पददर्शिनाम् ।
यथागमं यथाप्रज्ञं न्यायलेशो निदर्श्यते ॥
अर्थावसायप्रसवनिमित्तं शब्द इष्यते ।
तदेतत्प्रक्रमापेक्षं भाष्यकृत् प्रत्यवी(पीप)दत् ॥

**End:**

सान्द्राविद्यातिमिरपटलाच्छादितातंदृ(न्तर्दृ)शो ये
दृष्टि मन्दा रव(वर)मुनिमते कुर्वते सावमानम् ।
तेभ्योऽविद्यातिमिरपटलोल्लेखिनी संहितेयं
स्पष्टन्यायैर्घटितसुमतिर्दर्शिता स्फोटसिद्धिः ॥
वेदरक्षा तदूहश्च भेदसन्देहवारणम् ।
फलं व्याकरणस्याहुश्शब्दज्ञानं च लाघवम् ॥

(c) स्फोटसिद्धिः, सव्याख्या.

SPHŌṬASIDDHIḤ WITH COMMENTARY.

Foll. 24*a*—46*a*. Fol. 46*b* is left blank.

A treatise expounding and maintaining the doctrine of Sphōṭa. Similar to the work described under subdivision (*a*) of this No. By Bharatamiśra. This work is followed by a commentary.

Complete; but wants the beginning.

Contains the (१) प्रत्यक्षपरिच्छेद, (२) अर्थापत्तिपरिच्छेद and (३) आगमपरिच्छेद.

**Beginning:**

जयत्यशेषप्रकाश्यतत्पूर्वं . कुर्वन् निरवयवं चित्रशक्तिपदम् ।
एकाकारधिया तावत् वर्णेभ्योऽभ्यधिकं पदम् ।
शङ्कनीयान्यथासिद्धिनिरासेन समर्थ्यते ॥

इह कैश्चिद्वर्णातिरिक्ततया पदतत्त्वमेकाकारप्रत्ययनिर्भासमानमपि अनन्तरदृष्टार्थहेतुतया च तदागमे हि दृश्यत इत्यनेन न्यायेन प्रसिद्धमपि भगवदौदुम्बरायणाद्युपदिष्टाखण्डभावमपि व्यञ्जकारोपितनान्तरीयकभेदक्रमविच्छेदाभिनिविष्टैः परैरेकाकारनिर्भासमन्यथासिद्धीकृत्यार्थधीहेतुतां चान्यत्र सञ्चार्य भगवदौदुम्बरायणादीनामपि भगवदुपवर्षादिभिर्निर्मायापलपितमिति तत्समर्थनमपेक्षते । तच्चास्य समर्थनं वाक्यपदीयादिषु विप्रकीर्णमिति समासेन प्रतिपादनमाकाङ्क्षति । अतोऽस्मिन्प्रकरणे श्लोकदशकमात्रसूत्रितसमर्थनैः प्रत्यक्षार्थापत्त्यागमैर्वर्णातिरिक्तं पदतत्त्वं व्यवस्थाप्यते ।

* * * *

तितउ अग्रायीत्यादिष्वनैकपद्यापत्तेरिति गतमेतदपि तदेतत्सर्वमनुसन्धाय समुत्थितोऽयं प्रकरणस्याद्यः श्लोकः—

नैकधीस्थत्वमेकार्थधीः शैध्र्यं वैकपद्यकृत् ।
क्रमरोधात् तदुत्थत्वात् तितवादौ च दर्शनात् ॥

नकारोऽयं ब्रह्मनिष्ठो गुणक्रियादिरहितत्वेन विधिमुखप्रवृत्तशब्दान्तरागोचरेऽपि नेति नेतीत्यादावतद्व्यावृत्तिमुखेन दृष्टसामर्थ्य इति प्रसङ्गान्मङ्गलार्थोऽपि स्यादिति प्रथमं प्रयुक्तः ।

* * * *

अत्र परिच्छेदे—

एकान्यथासि(द्धि)मदूदुषाम तथैकधीस्थत्वमसीषधाम ।
नानात्वसंवित्तिमयूयुजाम सन्ध्यक्षरन्यायमवीवदाम ॥

**Colophon:**

इत्याचार्यभरतमिश्रकृतौ स्फोटसिद्धौ प्रत्यक्षपरिच्छेदस्समाप्तः ॥

**End:**

इह च परिच्छेदे—

इत्थं निरास्थामहि सर्वथार्थधीप्रक्लृप्त्युपायात् (न्)परवादिकल्पितात् (न्)।
स्फोटस्फुटीभावनिबन्धनध्वनिप्रभावमप्यत्र समार्थ(र्थया)महि ॥

**Colophon:**

इत्याचार्यभरतमिश्रकृतौ स्फोटसिद्धावर्थ(ापत्ति)परिच्छेदः समाप्तः ॥

एवमर्थप्रतिपत्त्यन्यथानुपपत्त्या वर्णातिरिक्तं वाक्यत्वमुपदर्शितम्। इदानी-मार्षप्रत्यक्षप्रतिपादनपरेणागमेनाप्युपपादयति । तथाहि—उत त्वः पश्य-न्नित्यादिवर्णानुसारेण वर्णातिरिक्तं पदतत्त्वमवसीयते ।

* * * *

अतोऽप्रकाशः प्रकाशी भवतीत्येतदपि दुर्घटम् । अतः प्रकाश एवा-निर्वाच्यस्वशक्तिवशेन प्रकाशाप्रकाशद्वैरूप्येन चकास्तीति सिद्धमनवच्छिन्न-तया तस्य सत्तास्वभावत्वम्। सत्तायाश्च प्रकाशमानायाः स्वातिरिक्तप्रकाशा-सम्भवात् प्रकाशस्वभावत्वम् ॥

**Colophon:**

इत्याचार्यश्रीभरतमिश्रकृतौ स्फोटसिद्धावागमपरिच्छेदस्समाप्तः ॥

---

R. No. **4377.**

Paper. 10⅝ × 9½ inches. Foll. 76. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. belonging to the Sanskrit College Library, Tiruppanittura, Cochin State.

Fol. 76 is left blank.

## ब्रह्मसूत्रभाष्यटीकाव्याख्या—गुर्वर्थदीपिका.

## BRAHMASŪTRABHĀṢYAṬĪKĀVYĀKHYĀ: GURVARTHA-DĪPIKĀ.

A commentary on Jayatīrtha's Brahmasūtrabhāṣyaṭīkā which itself is a commentary on Ānandatīrtha's Brahmasūtrabhāṣya, which work has been described under No. 4810 of the D.C.S. MSS., Vol. X: by Vādirājāyati. This commentary is also called Tattvaprakāśikā.

Contains the Pādas one and two complete and breaks off in the third Pāda of the first Adhyāya.

**Beginning:**

नत्वा नारायणं व्यासं हयास्यं मध्वमादगात् ।
वार्णी गुरूंश्च सकलान् कुर्वे गुर्वर्थदीपिकाम् ॥

नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम्---इति भाष्योक्तमङ्गलश्लोके भगवद्वाचकपदान्तरं विना नारायणपदस्यैवोपादानं, सङ्क्षेपविस्तराभ्यां हि प्रवदन्ति मनीषिण इति वचनात् सङ्क्षेपतश्चतुरध्यायार्थवचनार्थम् । दोष-वर्जितपदार्थपर्यालोचनया दुःखान्यसद्गुणाभावस्याप्यर्थतः प्राप्तेस्सद्गुणैरिति नोक्तम् ।

* * * *

टीकायां चानन्दादेश्शुद्धत्वं प्राकृतत्वादिदोषराहित्यम् । उरुत्वं पूर्ण-त्वम् । बहुलत्वं बहुसङ्ख्याकत्वम् । गुणानामप्यन्योऽन्यं भेदाभावात् एकत्रोक्तमपि विशेषणं सर्वत्रानुसन्धेयम् । इदं च भाष्ये प्रथमविशेषणोक्त-गुणबाहुल्यस्य श्रृङ्गग्राहिततया प्रदर्शनार्थम् ।

* * * *

**Colophon:**

इति श्रीमद्ब्रह्मसूत्रभाष्यटीकागुर्वर्थदीपिकायां वादिराजयतिकृतायां प्रथ-माध्यायस्य प्रथमः पादः ॥

* * * *

**Colophon:**

इति श्रीतत्त्वप्रकाशिकागुर्वर्थदीपिकायां प्रथमस्याध्यायस्य द्वितीयः पादः ॥

**End:**

अर्चिराद्यतिक्रमोक्तिः गम्यत्वोक्तिश्चेत्यत्रार्चिरादीनां क्रमेण गम्यत्व-मुक्त्वा तेषामेव गम्यमानमतिक्रमोक्तिः । तद्बलादतिक्रामतीति शङ्का । गम्यत्वोक्तिः गम्यान्तरं न केवलं ब्रह्मण एव गम्यत्वोक्तिः तद्बलान्नाति-क्रामतीति शङ्क्यर्थः । सर्पदी(वेदेव) पितृलोककामो ह(भ)वतीत्यत्र लोक.

R. No. **4378.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 150. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Īśvara Nambūdirippāḍ, Valathadattu-taranancllūr-mana, Peningathukara post, Cochin State.

Fol. 150*b* is left blank.

प्रयोगमञ्जरीविवरणम्---प्रद्योतः.

PRAYŌGAMAÑJARĪVIVARAṆAM: PRADYŌTAḤ.

A commentary on the Prayōgamañjarī which is a treatise dealing with the procedure connected with the worship of Śakti: by Trivikrama.

Complete in 21 Paṭalas.

**Beginning:**

नमश्शिवाय चित्तात्मदुर्विकासविकासिने ।
प्रकृष्टबोधप्रद्योतरवये च गरीयसे ॥
आ(क्ष)पादकुलोद्भूतनारायणतनूद्भवः ।
त्रिविक्रमोऽहं मञ्जर्या व्याख्यां कुर्वे यथाश्रुतम् ॥
तिरोहितार्थवाक्यानां पदानां वा यथामति ।
स्वार्थमेवापरिच्छिद्य श्रुतार्थस्य स्मृतेरिमाम् ॥

धर्मादिचतुष्टयसिद्धिकारणचर्याज्ञानक्रियायोगानुष्ठानफलसिद्ध्युपायप्रतिष्ठा-कर्मप्रकरणमारि[रि]प्सुः सर्वेश्वरस्य प्रणामच्छलेनेश्वरसद्भावं च प्रारिप्सितस्य प्रकरणस्य सम्बन्धाभिधेयप्रयोजनान्यपि बुद्धेरात्मभुव इत्याद्येनेन श्लोकेन सूचयति । तत्र प्रधानपुरुषव्यतिरिक्तः पुरुषाणामन्यतमो वा कोऽय-मीश्वर इति तद्भावेऽनुपपत्तिं पश्यन्ननवगतेश्वरसद्भावो वा पृच्छति ।

* * * *

**Colophon:**

इति प्रद्योते प्रयोगमञ्जरीविवरणे प्रथमः पटलः ॥

**End:**

भक्त्या पदाम्बुजसमर्पितयेति तपोबलेन भगवतः प्रसादात्तदाज्ञया मया कृतेयमित्याह---शिवपुरसद्ग्रामभुवा केरलदेशे बोकुराख्यग्रामजातेन काश्यप-

गोत्रसमस्तेन माठरकुलसम्भूतेन कोड्डुमुण्डाख्यगृहश्रेष्ठेन बहुयज्ञयाजिना चम्पकाख्यतटाकतीरप्रतिष्ठितशास्त्ररक्षितेन कपालिप्रेषितायाश्चामुण्डां हन्तुमागतायाः पुनरपि

* * * *

इयं सतामवतंसभूमौ शिरसोऽलङ्कारशेखरितमा भवन्तु(तु) इति ॥

**Colophon :**

इति प्रयोगमञ्जरीविवरणे प्रद्योते एकविंशः पटलः ॥

निखिलागमार्थसारप्रयोगमञ्जर्यगाधकमलिन्याः ।

प्रसृतस्त्रिविक्रमार्कात् व्याख्या प्रद्योत एष बोधाय ॥

इति प्रयोगमञ्जरीविवरणं समाप्तम् ॥

---

R. No. **4379.**

Paper. 10⅜ × 9½ inches. Foll. 58. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Nārāyaṇa Nambūdirippāḍ, Kūtalūr-mana, Nareri, Tritala, Malabar district.

**मीमांसानयविवेकः.**

MĪMĀṀSĀNAYAVIVĒKAḤ.

Same work as that described under R. No. 3253 ante, wherein see for the beginning. By Bhavanathamiśra.

Contains the IX Adhyāya only.

**End :**

राद्धान्तस्तु — अनपेक्षे हि पूर्ववाक्ये तदन्तविधिः । तदपेक्षया शेषताश्रुतिर्गौण्येव । देवता ह्यनुषङ्गात्पूर्वापरद्रव्यकयोस्समेति गौणतासंस्थाश्रुतिः कर्मान्तरेऽपि देवतासाम्यात् पूर्वसमाप्तिरिवेति । न हि हेयस्य पशोर्देवतोद्देश्यादालम्भ इति नाज्यस्य पूर्वयागे विधिरिति दिक् ॥

**Colophon :**

इति नयविवेके नवमस्य चतुर्थः पादः ॥

समाप्तश्चाध्यायः ॥

R. No. **4380.**

Paper. 10⅝ × 9½ inches. Foll. 28. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Paliyattu Valiya Acchan, Sennamangalam, Parur post, Cochin State.

Foll. 27*b* and 28 are left blank.

मालतीमाधवव्याख्या—रसमञ्जरी.

MĀLATĪMĀDHAVAVYĀKHYĀ: RASAMAÑJARĪ.

Same work as that described under R. No. 3071 ante, wherein see for the beginning. By Pūrṇasarasvatī, pupil of Pūrṇajyōtis.

Contains the Acts nine and ten only.

**End:**

अघोरघण्ट इति । अशास्त्रविहितहिंसापरत्वात् अधर्मः । कपालकुण्डलेति हिंसा । सौदामिनीति । प्रकाशात्मिका झडिति स्फुरणेन सकलान्धकारपटलविघटनपटीयसी विद्येत्यादिरूपासनोपयुक्ता वासनापि महाकवेर्निष्ठैरनुसन्धेयेति सकलमतिमङ्गलम् ॥

मालतीमाधवस्येत्थं दशमाङ्कार्थचर्चनम् ।
पूर्णज्योतिःप्रसादेन चक्रे पूर्णसरस्वती ॥

---

R. No. **4381.**

Paper. 10⅝ × 9½ inches. Foll. 94. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of the Raja of Chirakkal, Malabar district.

Fol. 94 is left blank.

पाणिनिसूत्रवृत्तिः.

PĀṆINISŪTRAVṚTTIḤ.

An illustrative commentary on Pāṇini's Aṣṭādhyāyī in the order of the original Sūtras.

Almost complete.

**Beginning:**

अइउण्, ऋऌक्, एओङ्, ऐऔच्, हयवरट्, लण्, ञमङणनम्, झभञ्, घढधष्, जबगडदश्, खफछठथचटतव्, कपय्,

शषसर् , हल्—इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि । एषामन्त्या इतः, लण्सूत्रेऽकारश्च । हादिष्वकारस्सुखार्थः । अनुस्वारविसर्गजिह्वामूलीयोपध्मानीयानामकारोपरि शर्षु च पाठो वाच्यः । संस्कर्ता । अनुस्वारस्याच्त्वात्सस्य द्वित्वम् । उरःकेण, उरᳲकेण, उरःपेण, उरᳲपेण अट्त्वाण्णत्वम् । यर्त्वाद्द्वित्वम् । वृद्धिरादैच् । छन्दोवत्सूत्राणि— इतीष्टिः । अदेङ् गुणः । इको गुणवृद्धी । गुण(णो)वृद्धिरिति विधौ इक इति षष्ठ्यन्तम् ।

* * * *

**Colophon:**

इति पाणिनिसूत्रवृत्तौ प्रथमस्याध्यायस्य चतुर्थः पादस्समाप्तः ॥

**End:**

निव्यभिभ्योऽड्व्यवाये वा छन्दसि वा षः । न्यषीदत् न्यसीदत् ॥

**Colophon:**

इति पाणिनिसूत्रवृत्तौ अष्टमस्याध्यायस्य तृतीयः पादः समाप्तः ॥

रषाभ्यां नो णस्समानपदे । स्तीर्णम् , पुष्णाति । ऋवर्णाद्वाच्यः । तिसृणाम् । अट्कुप्वाङ्नुंव्यवायेऽपि । रषाभ्यां नस्य ण एकपदे । करणम्, अर्केण, दर्पेण, पर्याणद्धम् । नुमित्यनुस्वारलक्षकम् । ब्रह्मा(बृंह)णम् । अत्र व्यवायेऽपीति विभज्य पूर्वेण(णैव)त्यत्र नियमादादर्शेनेत्यत्र न णः ।

* * * *

उदात्तस्वरितपरानुदात्तस्य न स्वरितः गार्ग्यादिमते तु स्यात् । गार्ग्यस्तत्र । गार्ग्यः क । अ अ । विवृताकारस्य संवृताकारः ॥

---

## R. No. 4382.

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 140. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of the Raja of Chirakkal, Malabar district.

Foll. 139*b* and 140 are left blank.

### गणितयुक्तिभाषा.

### GAṆITAYUKTIBHĀṢĀ.

A treatise in arithmetic and mensuration.
Incomplete.

**Beginning :**

वन्दे गण्डतटस्रवन्मदधुनीलोलोर्मिखेलद्भ्रम-
द्भृङ्गस्थानविपूरिताखिलहरिच्चक्रं गजास्यं विभुम् ।
विघ्नादी(द्री)न्द्रशिखाविभेदनचणं प्रत्यूहविच्छित्तये
वृत्रारिप्रमुखामरार्चितपदाम्भोजं दयाम्भोनिधिम् ॥

गुरुपादाम्बुजं नत्वा ध्यात्वा साम्बशिवं मया ।
लिख्यते गणितं कृत्स्नं ग्रहगत्युपयोगि यत् ॥

तत्र तन्त्रसङ्ग्रहमनुसृत्योपयोगगुणितान् सर्वान् वक्तुं प्रारम्भदिशि प्रथमतः सामान्यगतभूतसङ्क(ङ्क)लितादिपरिकर्माण्याह । तत्र गणितं क(स्मि)श्रित सङ्ख्येये सङ्ख्याविषर्याभूत्वा परामर्शशेषम् । सङ्ख्यायाः पुनपे(र)कमारभ्य दशपर्यन्तं विद्यमानाः प्रकृतिभूता इव वर्तेरन् । इमाः प्रत्येकं दशसङ्ख्यागुणितशत[शत]पर्यन्तं विद्यमानास्सङ्ख्या विकृतय इव वर्तेरन् । एकमारभ्य तासां स्थानतः एकं स्थानमतिक्रम्यापि भवेत् । इमा दशगुणिता । दशस्थानं पुनरीदृशविकृतयो यदि एतेषां स्थानं च भवेत् । एवं विद्यमानाष्टादशस्थानाना(न्या)श्रित्य विद्यमानसंज्ञा इमाः—

एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः ।
अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् ॥
जलधिश्चान्त्यं मध्यमिति दशगुणोत्तराः संज्ञाः ।
सङ्ख्यायाः स्थानानां व्यवहारार्थं कृताः पूर्वैः ॥

* * * *

**Colophon:**

इति गणितयुक्तिभाषायां समच्छेदस्य वर्गमूलीकरणप्रकरणम् ॥

**End:**

अनन्तरं नतिशराणां कोटिफलान्तरमूर्ध्वाधोभागीयान्तरालं भवति । एवं वयाणामपि वर्गयोगमूलं बिम्बान्तरं भवति । एवं स्फुटान्तरस्य वृत्त-

पादे आधिक्ये इत्थं बिम्बान्तरानयनप्रकारः । इदंग्रहणे बिम्बान्तरजननं पूर्वोक्तं च तुल्यन्यायम् । अथ शृङ्गोन्नतिं वक्ष्ये सर्वमन्य(द्य)थोदितम् ॥

**Colophon:**

इति गणितयुक्तिभाषा ।

---

R. No. **4383.**

Paper. $10\frac{5}{8} \times 9\frac{3}{8}$ inches. Foll. 60. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of the Raja of Chirakkal, Baliapatam, Malabar district.

Foll. 59*b* and 60 are left blank.

नैषधटीका — पदवाक्यार्थपञ्चिका.

NAIṢADHAṬĪKĀ: PADAVĀKYĀRTHAPAÑCIKĀ.

Same work as that described under R. Nos. 2729 and 3161 ante. By Ācāryaviśvēśvarabhaṭṭa.

Contains the Sargas one to three complete, but wants 15 Ślōkas in the beginning of the first Sarga.

---

R. No. **4384.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 178. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923-24 from a MS. of the Naduvil Maṭham, Trichur, Cochin State.

Fol. 178 is left blank.

इष्टसिद्धिविवरणम्

IṢṬASIDDHIVIVARAṆAM.

Same work as that described under R. No. 3350 ante; with slight difference in the beginning.

**Beginning:**

मायया यज्जगद्बीजं जीवा अज्ञानभेदतः ।
तज्ज्ञानं नित्यकूटस्थमद्वयं सद्भवाम्यहम् ॥
श्रुत्वापि यस्य बहुकालमचिन्तनेन
व्याख्यातुमक्षमतया परितापि चेतः ।
तस्यामि(भि)तापशमनाय मयेष्टसिद्धे-
रारभ्यते विवरणं प्रथितार्थमेतत् ॥

इष्टसिद्ध्याख्यं प्रकरणं चिकी . . . . . . . . . . रणपरिसमाप्तिप्रचयपरिपन्थिकल्मषविलयाय नमस्कारोऽकारि प्रतिपाद्यं च सङ्क्षेपतः प्रादर्शि प्रथमश्लोकेन । स यद्यपि टीकाकृता स्पष्टो व्याख्यायि; तथाप्यन्वयोऽन्वाख्यायते । यानुभूतिस्तां नमामीति ।

---

R. No. 4385.

Paper. 10⅝ × 9½ inches. Foll. 18. Lines, 20 in a page. Dēvanāgarī Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Nārāyaṇa Nambūdirippāḍ, Pūmalli-mana, Chalasseri, Malabar district.

Fol. 18 is left blank.

मीमांसासूत्रवृत्तिः.

MĪMĀṀSĀSŪTRAVṚTTIḤ.

This forms the further portion of the work described under R. No. 2973 ante.

Contains from the 22nd Sūtra of the II Pāda of the III Adhyāya upto the 31st Sūtra of the VI Pāda of the same Adhyāya

---

R. No. 4356.

Paper. 10⅝ × 9½ inches. Foll. 172. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1925–24 from a MS. of M.R.Ry. Nārāyaṇa Nambūdirippāḍ, Pūmalli-mana, Chalasseri, Malabar district.

Fol. 171*a* contains the name of the owner of the original MS. Foll. 171*b*—172*b* are left blank.

मीमांसासूत्रवृत्तिः.

MĪMĀṀSĀSŪTRAVṚTTIḤ.

A commentary on Jaimini's Pūrvamīmāṁsāsūtras in accordance with the views of Śabarasvāmin and on Bādarāyaṇa's Uttaramīmāmsā-Sūtras in accordance with the views of Śrī Śaṅkarācārya—described under Nos. 4466 and 4649 of the D.C.S. MSS., Vol. IX, respectively. The commentary on the Pūrvamimāṁsā-Sūtras herein contained is incomplete and comprises the portion from the third Pāda of the IV Adhyāya (wants the beginning) to the end of the XII Adhyāya, while the commentary on the Uttaramīmāṁsā-Sūtras is complete,

**Beginning :**

वाक्यार्थश्च गुणार्थवत् । यथा—इन्द्राय राज्ञे सूकरः—इत्यादौ वाक्यान्तरस्थेन विधिशब्देन गुणविधानं तद्वदिह फलविधानमित्यर्थः ।

तत्सर्वार्थमनादेशात्—विश्वजिदादेः फलत्वेन श्रूयमाणं सर्वं फलं, विनिगमनाविरहादित्यर्थः ॥

* * * *

**Colophon:**

इति चतुर्थस्याध्यायस्य तृतीयः पादः ॥

* * * *

फलचमसविधानाच्चेतरेषाम्—नार्त्विज्यमिति शेषः । असो(म)पत्वादिति यावत् । सान्नाय्ये च विप्रतिषेधे सोमव(प)त्वहेतुत्वात् । सान्नाय्यभक्षण-निषेधे असोमपीथत्वस्य हेतुत्वदर्शनाच्चासोमपत्वमित्यर्थः । चतुर्थाधिकरणे च निर्देशात् । ब्राह्मणानामिति शेषः । तस्माच्च नान्येषामार्त्विज्यमित्यर्थः । अन्वाहार्ये च दर्शनात् । दार्शपौर्णमासिकायां दक्षिणायां ब्राह्मणा इति दर्शनाच्च तेषामेवार्त्विज्यं नेतरयोरित्यर्थः । एतदधिकरणपर्यालोचनायामपि केरलेष्वब्राह्मणानामध्यापकत्वं पण्डितंमन्यैरभ्युपगम्यमानमयुक्तमिति सिद्धम् ॥

**Colophon:**

(इति) केरलीये द्वादशोऽध्यायः ॥

अथातो ब्रह्मजिज्ञासा—साधनचतुष्टयसम्पत्त्यनन्तरं धर्मविचारानन्तर-मेव वाग्निहोत्रादीनामनित्यफलतादर्शनात् । ब्रह्मणो विचारः कर्तव्य इति श्रोतव्यश्रुत्यर्थ इत्यर्थः ।

जन्माद्यस्य यतः—अस्य जगतः जन्मस्थितिभङ्गं यतस्सर्वज्ञात् सर्व-शक्तेः कारणात् भवति तद् ब्रह्म तच्च स्वरूपमिति—यतो वा इति वाक्यस्य, सत्यं ज्ञानमिति वाक्यस्य चार्थ इत्यर्थः । जगत्कारणत्वं तट-स्थलक्षणम् । सत्यादिकं स्वरूपलक्षणमिति भावः । शास्त्रयोनित्वात्—

* * * *

**Colophon:**

इति समन्वयाध्याये प्रथमः पादः ॥

**End:**

अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् । सगुणोपासकानामर्चिरादीनां(दिना) ब्रह्मलोकं प्राप्तानामनावृत्तिः, न ब्रह्मलोकात्प्रच्युतिः । कुतः? । न च पुनरावर्तत इत्यादिश्रुतेरित्यर्थः । सूत्राभ्यासश्शास्त्रसमाप्तिद्योतनार्थः ॥

जैमिनिबादरायणशबरस्वामिश्रीमदाचार्यपादेभ्यो नमः ॥

सर्वोपप्लवरहितप्रज्ञानघनप्रत्यगर्थो ब्रह्मैवाहमस्मि ॥

**Colophon:**

इति केरली(ये) फलाध्यायः षोडशः ॥

मीमांसार्थसङ्ग्रहस्समाप्तः ॥

---

R. No. **4387.**

Paper. 10¾ × 9½ inches. Foll. 206. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Nambiyan Sōmayājippāḍu, Vallayat-mana, Oorakam post, Malabar district.

Fol. 206*b* is left blank.

षोडशाध्यायीटिप्पणी—केरलीया.

ṢŌḌAŚĀDHYĀYĪṬIPPAṆĪ: KĒRALĪYĀ.

A commentary on the Ṣōḍaśādhyāyī which is a treatise in 16 Adhyāyas, giving the substance of the Pūrvamīmāṁsā and the Uttaramīmāṁsā in accordance with the Advaita-Vēdānta.

The work Ṣōḍaśādhyāyī has been described under R. No. 3400 ante. The commentary under notice is called Kēralīyā and the commentator, whose name is not given, seems to be an inhabitant of the Kerala country.

Complete in 16 Adhyāyas.

**Beginning:**

जैमिनिबादरायणशबरस्वामिशङ्कराचार्येभ्यो नमः ।

ग्रन्थारम्भे शिष्टाचारमनुविदधान आचार्यनत्यात्मकं मङ्गलं कृत्वा शिष्यशिक्षार्थं ग्रन्थतो निबध्नाति—जैमिनीत्यादिना । मङ्गलस्य च नियमेन फलवत्कार्यान्तरसंयोगात् साक्षादफलत्वाच्च फलवत्सन्निधावफलं तदङ्गमिति न्यायेन कार्यान्तरारम्भाङ्गत्वेऽवधृते सति आरम्भस्य समाप्तिपर्यन्तत्वादपेक्षिताविघ्नपरिसमाप्तिः प्रयोजनम् । अपेक्षितविधेरनपेक्षितविधानं दुर्बलमिति

न्यायेन फलान्तरकल्पनाया दुर्बलत्वात्। संशयं दर्शयति—तत्रेत्यादिना। तत्र शास्त्रमारम्भणीयमुतानारम्भणीयमित्येतावदेवाधिकरणशरीरम्; धर्मजिज्ञासेति सूचितत्वात्। संशयकोटिगतानि पञ्चम्यन्तानि पदानि तदर्थविचारत्वेन व्याख्येयानि।

* * * *

**Colophon:**

इति केरलीये षोडशाध्यायीटिप्पणे प्रथमस्याध्यायस्य प्रथमः पादः ॥

* * * *

तथापि क्रत्वर्थोऽपि नियमस्मृतिरस्तीत्याशयेनाह—ब्राह्मणानामिति। अत्र हि यज्ञं व्याख्यास्याम इत्युपक्रमात् क्रत्वर्थत्वं विस्पष्टमेवेति भावः ॥

**Colophon:**

इति केरलीये षोडशाध्यायीटिप्पणे द्वादशस्याध्यायस्य चतुर्थः पादः। समाप्तश्चाध्यायः ॥

धर्ममीमांसा च समाप्ता ॥

**End:**

इदानीं सकलविद्यास्थानैकतापन्नस्य परममहावाक्यस्य शास्त्रस्यार्थं दर्शयन् शिष्टाचारं चानुविदधानो ग्रन्थान्ते कृतं मङ्गलं शिष्याशिक्षार्थं ग्रन्थतो निबध्नाति—सर्वोपपन्नेति। एतादृशं सकलविद्यास्थानैकवाक्यत्वं तदर्थं च ब्रह्मान्यत्र श्रमं कुर्वन् प्रत्यवैतीत्यभिप्रायः ॥

**Colophon:**

इति केरलीये षोडशाध्यायीटिप्पणे षोडशस्याध्यायस्य चतुर्थः पादः ॥ समाप्तश्चाध्यायः ॥

टिप्पणं च समाप्तम् ॥

---

## R. No. 4388.

Paper. 10⅝ × 9½ inches. Foll. 40. Lines, 20 in a page Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of M.R.Ry. Nārāyaṇa Nambūdirippād, Kūtalūr-mana, Nareri, Tritala post, Malabar district.

Fol. 40 is left blank.

वेदान्तपरिभाषाप्रकाशिका.

VĒDĀNTAPARIBHĀṢĀPRAKĀŚIKĀ.

Same work as that described under R. No. 4261(b) ante. By Pettādīkṣita, son of Nārāyaṇadīkṣita.

Contains the Anupalabdhiparicchēda, Viṣayaparicchēda and Prayōjanaparicchēda complete.

---

R. No. **4389.**

Paper. 10⅝ × 9½ inches. Foll. 32. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1923–24 from a MS. of the Raja of Chirakkal, Baliapatam, Malabar district.

Foll. 31b and 32 are left blank

प्राकृतप्रकाशः, सव्याख्यः.

PRĀKṚTAPRAKĀŚAḤ WITH COMMENTARY.

A commentary on Vararuci's Prākṛtaprakāśa, which work has been described under No. 4389 of the D.C.S. MSS., Vol. III.

Complete in eight Paricchēdas.

**Beginning:**

श्रीदास्तु वः श्रीज(र्ज)लदोदराभे भुजान्तरे या भुवनैकभर्तुः ।
निष्टप्तनिर्णिक्तसुवर्णवर्णा जाम्बूनदीवाम्बुनिधौ विभाति ॥

भवस्स भवतः पायादगायाद्यस्य जाह्नवी ।
भाति मूर्ध्नि जटाजूटाबद्धसूत्रमिव स्थिता ॥

प्राकृतसूत्रगणानां वाररुचानां मयाधुना क्रियते ।
वृत्तिस्स्वरूपसिद्धिस्सङ्क्षिप्ताडम्बरेणेयम् ॥

आदेरतः—आदेरित्या परिच्छेदसमाप्तेरधिकारः । अत इति चा(च यावदा)-कारविधानादा(नम् । यदि)त ऊर्ध्वमनुक्रमिष्यामः । तदादेरतः स्थाने भवतीति वेदितव्यम् । आसमृद्ध्यं(द्ध्यादिषु वा) ।

* * * *

**Colophon:**

इति वररुचिप्रणीते प्राकृतप्रकाशे प्रथमः परिच्छेदः ॥

**End :**

शेष(:)संस्कृता(तव)त् । उपयुक्तादन्यश्शेषः । उपयुक्ताश्चात्र विहिताः कृत्तद्धितसमासादयः । तेभ्योऽनु संस्कृतविहितप्रत्ययादिभ्योऽवगन्तव्यः । इति ग्रन्थविस्तरभीरुणा शास्त्रकारेणोपसंहारः कृतः ॥

**Colophon :**

इति प्राकृतप्रकाशेऽष्टमः परिच्छेदः ॥

---

R. No. **4390.**

Paper. 10⅝ × 9½ inches. Foll. 200. Lines, 20 in a page. Grantha and Tamil. Good.

Transcribed in 1923–24 from a MS. of the Raja of Calicut, Paḍiññārekōvilagam, Calicut, Malabar district.

Fol. 200*b* is left blank.

नामलिङ्गानुशासनम् , लघुभाषासहितम्.

NĀMALIṄGĀNUŚĀSANAM WITH LAGHUBHĀṢĀ.

A commentary on Amarasiṁha's Nāmaliṅgānuśāsana, which work has been described under Nos. 1620—1685 of the D.C.S. MSS., Vol. III. The commentator, whose name is not given, says that he wrote this commentary at the instance of King Ravivarman.

Complete.

**Beginning :**

वन्दे स्कन्दाद्दतं देवं विघ्नराजं दयानिधिम् ।
गिरां देवीमपि गुरुं शङ्करं विष्णुमेव च ॥
ज्ञानिनामरसिंहेन कृतिं कुलबुवायो ? ।
भाषालेखनकर्मत्तिन्नारम्भे(भे)स्वामिसंश्रयात् ॥
यस्य ज्ञानदया(. . .) स श्रियै चामृताय च ॥

[अ]ज्ञानदययोस्समुद्रवद्गम्भीरापारस्य अगाधस्यान्यैरप्राप्तं ज्ञानं दया

*  *  *  *

इत्थं जि(नं) नमस्मृत्यस्य(स्कृत्य स्व)प्रवृत्तिमाह—समाहृत्येति ।

(समाहृत्या)न्यतन्त्राणि (. . .) नामलिङ्गानुशासनम् ॥

अन्यानि तन्त्राणि अभिधानशास्त्राणि समाहृत्य ।

*  *  *  *

**Colophon:**

इति अमरकोशव्याख्याने लघुभाषाख्याने प्रथमकाण्डः समाप्तः ॥

* * * *

**Colophon:**

इत्यमरकोशव्याख्याने शूद्रवर्गस्समाप्तः ॥

**End:**

शेषं तु ज्ञेयं शिष्टप्रयोगतः । इह यन्नो(क्तं) तल्लक्ष्यं द्रष्टव्यम् । वेदाः प्रमाणं स्मृतयः प्रमाणं विप्राशिषो भद्रमतीव लोके ॥

**Colophon:**

इति विशेष्यनिघ्नलिङ्गप्रकरणम् ॥

कृतावमरसिंहस्य (. . .) तार्तीयस्साङ्गोपाङ्गस्समर्थितः ॥ इति ॥

**Colophon:**

श्रीरविवर्मनृपालस्याज्ञावशगेन केनचित्सुमतेः ।

लघुभाषेयं लिखिता सततं नम(ता) विमत्सरान् विबुधान् ॥

* * * *

इति रविवर्मकृतौ अमरव्याख्यायां लघुभाषायां तृतीयकाण्डस्समाप्तः ॥

---

R. No. **4391.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 170. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923-24 from a MS. of M.R.Ry. Tippan Nambūdirippāḍ, Ponnurkotta-mana, Perumbavore post, Travancore State.

Fol. 170*b* is left blank.

सिद्धान्तशेखरः, गणितभूषणव्याख्यासहितः.

SIDDHĀNTAŚĒKHARAḤ WITH THE COMMENTARY GAṆITABHŪṢAṆA.

Same text as that described under No. **13506** of the **D.C.S. MSS.**, Vol. XXIV. By Śrīpati. The work is followed by a commentary by Makkibhaṭṭa who mentions Vyāsadhīrayati and Dāmōdara.

Contains the commentary on Adhyāyas one to three complete and breaks off in course of the fourth Adhyāya.

**Beginning :**

देवौ विष्णुविरिञ्चवन्दितपदद्वन्द्वारविन्दौ शिवौ
नित्यानन्दघनौ समस्तजगतामानन्ददौ दम्पती ।
सृष्टिस्थित्यवि(पि)धानकृत्यनिरतौ लोकेश्वराराधितौ
विस्पष्टं प्रविदार्य मोहपटलं ज्ञानं विधत्तां मम ॥
तीर्णो वेदमहार्णवस्तिर्लकितं वेदान्तिनां दर्शनं
पीतं व्याकरणामृतं विघटितं प्राभाकरं भाट्टयुक् ।
क्षुण्णो न्यायमहाचलो विमृदितो बाह्यागमस्सादरं
येनासौ भुवने चकास्ति यतिराट् श्रीव्यासधीराह्वयः ॥
बुद्धिमन्थानमथितज्योतिश्शास्त्रमहाम्बुधिः ।
दामोदरो विजयते दामोदर इवापरः ॥
वेदव्याकरणाश्रयस्सुकविताविदान्ततर्कस्मृति-
च्छन्दोऽलङ्कृतिकाव्यनाटकपुराणाम्नायवारांनिधिः ।
ज्योतिश्शास्त्रसुमन्त्रनीतिनिपुणो यो योगशास्त्रे पटुः
मक्काख्यो विवृणोति भट्ट ऋतवाक् सिद्धान्तसच्छेखरम् ॥

इह सकलज्योतिश्शास्त्रपारावारपारङ्गतो महाविद्वान् श्रीपतिराचार्यो लोकोपकाराय कालक्रियागणितगोलैः पादत्रयात्मकं गणितशास्त्रं चिकीर्षुरादौ तस्याविघ्नेन परिसमाप्तये प्रचयगमनाय च विशिष्टेष्टदेवतात्मकसूर्यानुस्मरणरूपं मङ्गलमाचरति शार्दूलविक्रीडितेन प्रथमेन श्लोकेन —

यत्तेजः पितृधाम्नि शीतमहसः पाथोमये मण्डले (. . .)
त्रैलोक्यालयदीपको विजयते देवो निधिस्तेजसाम् ॥

स तेजसां निधिः देव आदित्यो विजयत इत्यन्वयः । स इति सर्वनाम्ना सर्वलोकप्रसिद्धत्वमुक्तम् । तदेव प्रकटयति — यत्तेज इत्यादिना ।

* * * *

इत्येवं मक्किभट्टीये नाम्ना गणितभूषणे ।
सैद्धान्तशेखरेऽध्यायस्साधनानि वदन् गतः ॥

**Colophon :**

इति मक्किभट्टविरचिते सिद्धान्तशेखरव्याख्याने गणितभूषणे साधनाध्यायः प्रथमः ॥

इत्येवं साधनाध्यायो व्याख्यातस्सहवासनः ।
द्युगणान्मध्यमान् जल्पन् अध्यायो व्याकरिष्यते ॥

**End:**

योगस्य विष्कम्भादेरन्तं भवति। तत्र लब्धेऽस्य पूर्वार्धेन निर्गमनकाल उत्तरकालेनोत्तरप्रवेशकाल इति विशेषो द्रष्टव्यः ॥

व्याख्याने मक्किभट्टीये, इत्थं गणितभूषणे ।
सैद्धान्तशेखरेऽध्यायस्तृतीयोऽवसितिं गतः ॥

**Colophon:**

इति सिद्धान्तशेखरे(रव्याख्याने) तृतीयोऽध्यायः ॥

अथ त्रिप्रश्नाध्यायो व्याख्यायते । त्रयः प्रश्ना यत्र साध्यन्ते स त्रिप्रश्नाध्यायः । एतदुक्तं भवति—नत्याक्षापक्रमैर्विषुवदिष्टमध्याह्नच्छायार्कै-र्वा द्वाभ्यां चाभ्यामेकैकस्य पृच्छायां त्रयः प्रश्नास्सम्पद्यन्ते । तेषामुत्तरं यत्राभिधीयते, स त्रिप्रश्नाध्याय इति ।

* * * *

पुनरपि कोणशङ्क्वानयने शार्दूलविक्रीडितेन प्रकारद्वयमाह—
क्रान्तिज्यापलकर्णवर्गगुणितावाष्टाङ्कखाम्भोधिभिः ।
भक्ता स्यात् पलकर्णकृति.

---

R. No. **4392.**

Paper. 10⅝ × 9½ inches. Foll. 163. Lines, 20 in a page. Grantha. Good.

Transcribed in 1923–24 from a MS. of the Tanjore Palace Library, Tanjore.

Fol. 163*b* is left blank.

**इष्टसिद्धिः.**

ISṬASIDDHIḤ.

Same work as that described under R. No. 3453 ante. By Vimuktātman, disciple of Avyayātman.

Complete in eight Adhyāyas.

---

R. No. **4393.**

**Paper. 10⅝ × 9½ inches. Foll. 168. Lines, 20 in a page. Dēvanāgarī and Grantha. Good.**

**Transcribed in 1923–24 from a MS. of the Government Oriental Library, Mysore.**

**Fol. 168*b* is left blank.**

इष्टसिद्धिः.

ISṬASIDDHIḤ.

Same work as that described under R. No. 3453 ante. By Vimuktātman, disciple of Avyayātman.

Complete in eight Adhyāyas.

---

## R. No. 4394.

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 84. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1923–24 from a MS. described under No. 446 of the D.C.S. MSS., Vol. I, Part III.

Fol. 84 is left blank.

मन्त्रकल्पः.

MANTRAKALPAḤ.

Contains the following Mantras :—

| Fol. | | | | | |
|---|---|---|---|---|---|
| 1a | मृत्युञ्जयत्र्यम्बकमन्त्रः | Same work as that described under No. | 6953 | of the D.C.S. MSS., | Vol. XIII. |
| 2a | त्र्यम्बकरुद्रकवचः | Do. | 6359 | do. | Vol. XIII. |
| 3b | नीलकण्ठवडवानलमन्त्रः | Do. | 6504 | do. | Vol. XIII. |
| 4b | आवहन्तीकल्पः | Do. | 7762 | do. | Vol. XV. |
| 8a | इन्द्राक्षीस्तोत्रकल्पः | Do. | 7772 | do. | Vol. XV. |
| 12b | गायत्रीकल्पपञ्जरहृदयस्तवराजसहस्रनामादि | Do. | 6198 | do. | Vol. XII. |
| 70a | तृचकल्पः | Do. | 7850 | do. | Vol. XV. |
| 77b | सूर्यनारायणपूजा | Do. | 8730 | do. | Vol. XVI, |
| 81a | सूर्यसपर्यास्तोत्र | Do. | 11322 | do. | Vol. XIX. |
| 83a | सूर्यद्वादशार्यास्तोत्र | Do. | 11313 | do. | Vol. XIX. |

---

## R. No. 4395.

Paper. $8\frac{3}{8} \times 7$ inches. Foll. 429. Lines, 25 in a page. Grantha. Good.

Presented in 1923–24 by M.R.Ry. Rāmānujācāryar, Retired Tamil Pandit, Government College, Kumbakonam.

Bound in two volumes.

(*a*) पाणिनिसूत्रव्याख्यानम् , उदाहरणश्लोकसहितम्.

PĀṆINĪSŪTRAVYĀKHYĀNAM WITH ILLUSTRATIVE STANZAS.

Foll. 1*b*—384*b*. Fol. 1*a* contains the name of the owner of this MS.

A commentary on Pāṇini's Aṣṭādhyāyīsūtras, which work has been described under No. 1246 of the D.C.S. MSS., Vol. III: by Vīrarāghavācārya of Maṇalūru.

Contains from the beginning of the Strīpratyayaprakaraṇa to the end of the Liṅgānuśāsanaprakaraṇa, but a small portion in the end of the Vaidikaprakaraṇa is wanted.

**Beginning:**

स्त्रियाम् । अजाद्यतष्टाप्—अजादीनामकारान्तस्य च स्त्रियां टाप् स्यात् । अजादिगणपाठे अध्याय: (IV-1-1). भोजचरित्रे—स्वाम्युक्ते यो न यतते स भृत्यो भृत्यपाशकः । तज्जीवनमपि व्यर्थमजागलकुचाविव ॥ जातिरस्त्री इति ङीषि अजा—टाप् । रघुवंशे 13-39—लक्ष्मणः प्रथमं श्रुत्वा कोकिलामञ्जुवादिनीम् । शिवाघोरस्वनां पश्चाद्बुबुधे विकृतेति ताम् । घोरस्वना—अदन्तत्वाट्टाप् । कोकिला—अजादित्वाट्टाप् ।

**End:**

षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु—वाचस्पतिदिवस्पृष्ठतमस्पार इत्यादीनि । अस्मिन् वाचस्पत्यं वाग्मित्वम् । कस्कादित्वात्सः । अलुक्पक्षे षष्ठ्याः पतिपुत्रेत्यादिना सत्वमिति स्वामी । तन्न, छन्दोविषयत्वात् । ब्राह्मणादित्वात् ष्यञ् । भारवि 11-43—अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि । व्रजत्यफलतामेव नयद्रुह इवेहितम् ॥ वाचस्पतेः बृहस्पतेः । कस्कादित्वात्सः । अथवा षष्ठ्याः पतिपुत्रेति सकारः । एतस्मादेव ज्ञापकादलुगिति केचित् । लिङ्गम् । स्त्री—अधिकारसूत्रे एते । ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः । ऋकारान्ता एते पञ्च स्त्रीलिङ्गाः ।

* * * *

अवशिष्टलिङ्गम् (. . .) अव्ययकतियुष्मदस्मदः (. . .) ष्णान्ता सङ्ख्या । शिष्टा परवत् । एकः पुरुषः । एका स्त्री । एकं कुलम् । गुणवचनं च । शुक्लः पटः । शुक्ला पटी । शुक्लं वस्त्रम् । कृत्याश्च । करणाधिकरणयोर्ल्युट् । सर्वादीनि सर्वनामानि ।

स्पष्टार्थेयं त्रिसूत्री ॥

Foll. 384*b*—386*b* give the contents of the Gaṇapāṭha.

(b) धातुपाठानुक्रमणिका, उदाहरणादिसहिता.
DHĀTUPĀṬHĀNUKRAMAṆIKĀ WITH ILLUSTRATIONS, Etc.

An index of the list of roots in the Sanskrit language according to Pāṇini. The work contains illustrations.

Incomplete.

**Beginning :**

अंस— समाघाते; णिच् । अक । अकि लक्षणे; शप् , आ । अक्षू-लट् , अक्षति । लिट् , आनक्ष । अग । अगि गत्यर्थः ; शप्, प । अघि-गत्याक्षेपे; शप् , आ । अङ्क पदे लक्षणे च । णिच्. उभ. अचि । अचु । अज--गतिक्षेपणयोः ; शप् , प । अञ्चु-गतिपूजनयोः ; शप्, प । सकर्म(कः)कर्तरि लट्—अञ्चति; लिट्—आनञ्च, आनञ्चुः ; लुट्— आञ्चिता ; लृट्--अञ्चिष्यति; लोट्—अञ्चतु ; लङ्—आञ्चत् ; विधिलिङ्— अञ्चेत्; आशीर्लिङ्—अञ्चयात्; गतौ तु अच्यात्; लुङ्—आञ्चीत्; लृङ्—आञ्चिष्यत्; शतृ—अञ्चन्, अञ्चित्वा, अञ्चितः; कर्मणि लट्— अच्यते, अञ्चयते; णिचि—अञ्चयति ; सनि लटि—अञ्चिचिषति ।

**End :**

दद—दाने । शप्, आ । लट्--ददते; लिट्—द(द)दे (द)ददाते (द)ददिरे; लुट्—ददिता; लृट्—ददिष्यते; लोट्—ददताम्; लङ्—अददत; (विधि)लिङ्—ददेत ; आशीर्लिङ्—ददिषीष्ट; लुङ्—अददिष्ट; लृङ्— अददिष्यत । कर्मणि—दद्यते ; लुङ्—अदादि ; णिच—दादयति; लुङ्— अदीददत्; सन्—दिददिषते; यङ्- दादद्यते, यङ्लुक्—दादत्ति, ददितः, ददानः.

---

R. No. **4396.**

Paper. 8½ × 6 inches. Foll. 150. Lines, 13 in a page. Grantha. Good.

Presented in 1923–24 by M.R.Ry. M. V. Rāmānujācāryar, Retired Tamil Pandit, Government College, Kumbakonam.

पदनिर्वचनप्रकारः.
PADANIRVACANAPRAKĀRAḤ.

Foll. 105b and 150b are left blank.

On the mode of the derivation of words in alphabetical order.

Almost complete.

**Beginning:**

अ—प्रत्ययः ; 3278, 3279, 3280. 454, टाप् । 940, समासान्तः अ-प्रत्ययः । अंसः—अमेस्सन्; 5-21, औणादिकः सन् । अंहः—अमेर्हुक् च ; 4-212, औ—असुन् । अंहतिः—हन्ति दुरितमनया दानं हन्तेरंह च; 4-62, औ-अतिप्रत्ययः अंहादेशः । अकाल; 1437, भवार्थे ठञ् । अध्यात्मादि ; 4-70-1777, समानकालस्य आकाल आदेशः आकालात् ठन् (ठक्) । अक्नुच्—उणादि ; 3-81, अक्षः-अशेर्देवने; 3-65, औ-सः; (काक्षः—) 1030, कादेशः ; 761, समासः 940, अनक्षे—इति प्रतिषेधात् धूश्शब्दवत् न समासान्तः । अक्षरम्—अशेस्सरः ; 3-70, औ-सरः । अक्षि-अशेर्नित्; 3-156, औ—क्सिः । 677, अव्ययीभावे टच्; 852, बहुव्रीहौ षच् ; 1825, जाहच् ; 944, गवाक्षः—अच् । अगः—760, नञ् प्रकृत्या वा ; नगः । अगस्तिः—विन्ध्याख्यमगमस्यतीति अगस्तिः—तिप्रत्ययः । शकन्ध्वादिः । अगस्त्यः ; 499, छे च ङ्यां च यकारलोपः ।

**End:**

ह्रोमः ; 1-1 7, औ—मन् । ह्रस्वः—(1-152) औ—वन्; 892—कप्यावन्तस्य वा ह्रस्वः ; 1001—संज्ञाछन्दसोः तत्पुरुषे ङ्यापोर्वा ह्रस्वः; 1002—त्वे च—ङ्यापोर्वा ह्रस्वः ; 1006—नित्यः ह्रस्वः ; 2565—चङ्परे णावुपधाया वा ह्रस्वः । 2955—खच्परे णौ उपधाया ह्रस्वः ; 2015—इष्टादिषु ह्रस्वशब्दस्य लोपः । ह्रीका ह्लीका; 3-48, औ-कन् ।

Foll. 104*b* and 105 contain the derivation of few words beginning with अ.

---

R. No. **4397.**

Palm-leaf. **16⅝** × 1½ inches. Foll. 45. Lines, 7 in a page. **Telugu.** Much injured.

Purchased in 1923–24 from M.R.Ry. Koṇḍaguṇṭa Subrahmaṇyamgāru, Amadalapāḍu, Muthukuru post, Nellore district.

**सपर्याकल्पवल्ली.**

SAPARYĀKALPAVALLĪ.

**Same work as that described under No. 5750 of the D.C.S. MSS.,** Vol. **XII.** By Śrīnivāsa.

Contains the Stabakas one to five complete.

The first stanza of the work is different as given below

**Beginning:**

वन्दे सिन्धुरराजबन्धुरमुखं बन्धूकपुष्पप्रभं
सिन्दूरारुणकुम्भयुग्मविलसच्चन्द्रार्धयुक्छेखरम् ।
गण्डद्वन्द्वगलन्मदद्रवमिलन्मैलिन्दबृन्दं शनैः
कर्णाभ्यां विनिवारयन्तमनिशं प्रत्यूहविच्छित्तये ॥

Date of transcription—Wednesday, the 10th day of the bright fortnight of the lunar month Āṣāḍha in the year Vikṛti. Name of the scribe—Vāḷīśvara of Bhuvanapalli.

---

R. No. **4398.**

Palm-leaf. 15¼ × 1¼ inches. Foll. 118. Lines, 5 in a page. **Telugu.** Much injured.

Purchased in 1923-24 from M.R.Ry. Koṇḍaguṇṭa Subrahmaṇyamgāru, Amadalapāḍu, Muthukur post, Nellore district.

Foll. 1*a*—2*a* contain a portion of Taittirīyāraṇyaka. Fol. 2 contains the Prāṇapratiṣṭhāmantra. Foll. 3*a*—4*a* contain Jyautiṣaviṣaya. Fol.4*b* is left blank.

(*a*) वासिष्ठसंहिता.

VĀSIṢṬHASAṀHITĀ.

Foll. 5*a*—54*a*. Fol. 54*b* is left blank.

A portion of the Vāsiṣṭhasaṁhitā dealing with the following subjects:—

१. सन्ध्याकर्मविभागः.
२. जपसाधनकर्मविभागः.
३. महायन्त्रन्यासस्वरूपविभागः.
४. मन्त्रकर्मस्वरूपविभागः.
५. प्रणवव्याहृतिसावित्रीध्यानकर्मविभागः.
६. ब्रह्मकवचम्.
७. जपविधिपञ्चकन्यासस्वरूपविभागः.
८. सावित्रीशताक्षरध्यानस्वरूपविभागः.

Contains the Adhyāyas one to eight complete.

**Beginning:**

वन्दे वसिष्ठं ब्रह्माणमात्मजस्यात्मजं सुतम् ।
नप्तारं ससुतं ब्रह्मा ऋषीन् देवान् पितॄ(नपि) ॥
वसिष्ठसंहितां वन्दे कर्मब्रह्मस्वरूपिणीम् ।
नित्यनिष्ठं तपोनिष्ठं वसिष्ठमुनिपुङ्गवम् ॥

*  *  *  *

न ब्राह्मणो वेदपाठान्न शास्त्रपठनादपि ।
देव्यास्त्रैकालिकाभ्यासाद्ब्राह्मणः स्याद्धि नान्यथा ॥
एवं नि(नी)त्याथ कुरुते सन्ध्यायां प्रत्यहं तु यः ।
स एव परमात्मा स्याज्जीवन्मुक्तो न संशयः ॥

**Colophon :**

इति श्रीवसिष्ठसंहितायां चतुर्विंशत्साहस्त्रिकायां वसिष्ठपराशरसंवादे सन्ध्याकर्मविभागो नाम प्रथमोऽध्यायः ॥

**End :**

इत्येतान्यपि गुह्यानि मयोक्तानि तवानघ ।
शताक्षराख्यध्यानानि पठनीयानि यत्नतः ॥
य एवं जपकालेऽस्मिन् ऋष्यादिन्यासपूर्वकम् ।
आदावन्ते स्मरेत्तत्तद्वर्णकध्यानदेवताः ॥
स पातकेभ्यो मुक्तस्सन् भुक्त्वा भोगान्मनोरथान् ।
तदन्ते ब्रह्मसायुज्यं प्रमुयान्नात्र संशयः ॥

**Colophon:**

इति श्रीवसिष्ठसंहितायां चतुर्विंशत्सहस्त्रिकायां ब्रह्मविद्यायां वसिष्ठ-पराशरसंवादे सावित्रीशताक्षरध्यानस्वरूपविभागो नामाष्टमोऽध्यायः ॥

इति श्रीवसिष्ठसंहितायां वसिष्ठपराशरसंवादे अष्टमोऽध्यायः ॥

Foll. 55*a*—56*b* contain the Śaucavidhivacanas.

---

(*b*) विश्वामित्रसंहिता.

VIŚVĀMITRASAMHITĀ.

Foll. 57*a*—89*b*.

Slightly different from the work described under No. 8083 of the D.C.S. MSS., Vol. XV.

Contains the following nine Adhyāyas complete :—

१. आह्निकविधियोगः.
२. शुद्धाचमनविधिः.
३. प्राणायामविधिः.
४. मार्जनविधिः.
५. अर्घ्यप्रदानविधिः.
६. प्राणायामध्यानन्यासयोगः.
७ कालत्रये जपयोगविधिः.
८. नानाप्रयोगविधिः.
९. उपस्थानविधिः.

**Beginning :**

सहस्रदलपङ्कजं सकलशीतरश्मिप्रभं
(वराभयकराम्बुजं) विमलगन्धपुष्पप्रभम् ।
प्रसन्नवदनेक्षणं (सकलदेवतारूपिणं
स्मरेच्छि)रसि पावनं तदभिधानपूर्वं गुरुम् ॥
स्वगुरुं पूजयेद्देवीमुपचारैस्तु पञ्चभिः ।
भक्तिश्रद्धानुसारेण विश्वामित्रं प्रकल्पयेत् ॥
प्रातरुत्थाय यो विप्रः स्वात्म . . . . . . ।
प्रभातस्सुप्रभाते च गायत्रीं तत्र चिन्तयेत् ॥

* * * *

मया कृतं मूत्रपुरीष[शाव]शौचं प्रक्षाल्य गण्डूषणमास्य(मेह)नं च ।
वस्त्रस्य प्रक्षालनदुष्कृतं च क्षमस्व गङ्गे मम सुप्रसन्ने ॥

**Colophon :**

इति श्रीविश्वामित्रसंहितायामाह्निकविधियोगो नाम प्रथमोऽध्यायः ॥

**End :**

प्रियासान्तं समुच्चार्य देवीं ध्यायेच्चतुष्पदाम् ।
पञ्चोपचारैरभ्यर्च्य गायत्रीं तुर्यया सह ॥

**Colophon :**

इति श्रीविश्वामित्रसंहितायां सन्ध्योपस्थानविधियोगो नाम नवमोऽध्यायः ॥

---

(c) कृष्णजयन्तीव्रतकल्पः.

KṚṢṆAJAYANTĪVRATAKALPAḤ.

Foll. 91*a*—102*b*. Fol. 90 is left blank.

Same work as that described under No. 8272 of the D.C.S. MSS., Vol. XVI. With slight difference at the end and in the colophon.

क्षीरस्वबृन्दैस्तु कुतूहलेन गच्छेत्समीपं तु मुहुस्सभार्यः ।
प्रयाति लोकं . . . . . . . . . विष्णोः परमेश्वरस्य ॥

**Colophon :**

इति भविष्योत्तरपुराणे कृष्णाष्टमीव्रतं सम्पूर्णम् ॥

**Foll. 103*a*—118*a* contain some Dharmaśāstravacanas. Fol. 118*b* is left blank.**

## R. No. 4399.

Palm-leaf. 15⅝ × 1½ inches Foll. 100. Lines, 8 in a page. Telugu. Slightly injured.

Purchased in 1923–24 from M.R.Ry. Koṇḍaguṇṭa Subrahmaṇyamgaru, Amadalapaḍu, Muthukur post, Nellore district.

Fol. 1 contains the Kalāmantra.

### (a) नाथनवरत्नमाला, मञ्जूषाव्याख्यासहिता.

### NĀTHANAVARATNAMĀLĀ WITH THE COMMENTARY MAÑJŪṢĀ.

Foll. 2a—6b.

Same work as that described under R. No 2948 ante. By Bhāsurānandanātha, son of Gambhīrarāyasūri and pupil of Nṛsiṁhānandanātha.

Complete.

---

### (b) वरिवस्यारहस्यम्, सव्याख्यानम्.

### VARIVASYĀRAHASYAM WITH COMMENTARY.

Foll. 7a—13a. Fol 13b is left blank.

Same work as that described under No. 5717 of the D.C.S. MSS., Vol. XII. With slight difference in the beginning and end. By Bhāsurānandanātha, son of Gambhīraraya and pupil of Nṛsiṁhānandanātha.

Complete.

**Beginning:**

स जयति महाप्रकाशो यस्मिन् दृष्टे न दृश्यते किमपि ।
कथमिव तस्मिन् ज्ञाते सर्वं ज्ञात(मिद)मुच्यते वेदे ॥
नैसर्गिकी स्फुरत्ता विमर्शरूपास्य वर्तते शक्तिः ।
तद्योगादेव शिवो जगदुत्पादयति पाति संहरति ॥
सावश्यं विज्ञेया यत्परिणामादभूदेषा ।
अर्थमयी शब्दमयी चक्रमयी देहमय्यपि च सृष्टिः ॥

* * * *

भास्कररायेण गुरोः करुणावशतस्समुन्मिषिते ।
वरिवस्यातिरहस्ये पूर्वार्धः पूर्णतामापे(प) ॥

**Colophon:**

इति श्रीनृसिंहानन्दनाथचरणाराधके(न) भास्कररायनाम्ना भासुरानन्दनाथेन परिणीते वरिवस्यारहस्ये तत्प्रकाशे च प्रथमोपदेशः ॥

**End :**

गुरुचरणैकसहायो भास्कररायो जगन्मातुः ।
वरिवस्यातिरहस्यं वीरनमस्यं प्रजन्ग्रन्थम् (ग्रन्थ) ॥
वस्तु प्रस्तुतमस्तु निस्तुलमहःस्तोमास्तिता वास्तु नो
हस्तन्यस्तसमस्तपुस्तकमरव्वस्तासदेनस्तति ।
शस्तस्वस्तिकदस्तदुस्तरतमस्स्वस्तोकसे(सौ)वस्तिकं
गीस्तोयस्तनयित्नुसुस्तनयुगं वास्तोष्पतिप्रस्तुता(तम्) ॥

**Colophon:**

इति श्रीमत्पदवाक्यप्रमाणपारावा(रप)ारीणधुरीण (. . .) भासुरानन्द-नाथेन प्रणीतं वरिवस्यारहस्यं सव्याख्यानं समाप्तिमगमत् ॥

Name of the scribe—Koṇḍaguṇṭa Nārāyaṇa Śāstrin.

---

(*c*) मालामन्त्रकल्पः.

MĀLĀMANTRAKALPAḤ.

Foll. 14*a*—48*a*. Foll. 25*b* and 48 are left blank.

On the procedure connected with reciting the Mālāmantra and the touching of particular parts of the body, prior to the worship of Śrīcakra.

Complete.

**Beginning:**

मालामन्त्रं प्रवक्ष्यामि महाराज्यमहोदयम् ।
यस्य स्मरणमात्रेण पूजासिद्धिः प्रजायते ॥
त्रिवारं प्रणवं प्रोच्य नमस्त्रिपुरसुन्दरि ! ।
हृदये देवीशब्दान्ते शिरोदेवीति कीर्तयेत् ॥
शिखादेवी पदं प्रोच्य कवचदेवीशब्दतः ।
नेत्रदेव्यस्त्रदेवीति कामेश्वरि भगेति च ॥

**End:**

इति प्रकटादिनवयोगिनीसहितत्रिपुरादिनवचक्रेश्वरीसहितसङ्क्षोभिण्यादिनवमुद्रासहितत्रैलोक्यमोहनादिनवचक्राणां सर्वोपाधिशून्यो मोक्षो भवतीति परमार्थः । एवं पूजाक्रमं ज्ञात्वा प्रत्यहं चक्रपूजां कर्तुः जरामरणादिवर्जितस्सर्वोपाधिशून्यो मोक्षो भवतीति परमार्थः ॥

(*d*) श्रीविद्यारत्नसूत्रदीपिका.
ŚRĪVIDYĀRATNASŪTRADĪPIKĀ.

Foll. 49*a*—63*a*. Fol. 63*b* is left blank.

Same work as that described under No. 5741 of the D.C.S. MSS., Vol. XII. By Vidyaranya.

Complete.

Foll. 64*a*—65*b* contain the Āmnāyapūjāviṣaya.

---

(*e*) सौभाग्यरत्नाकरः.
SAUBHĀGYARATNĀKARAḤ

Foll. 66*a*—88*a*. Foll 72*b* and 88*b* are left blank.

Same work as that described under No. 5756 of the D.C.S. MSS., Vol. XII. By Vidyānandanātha, disciple of Saccidānandanātha.

Contains the Taraṅgas 11—13 only.

---

(*f*) मातृकाचक्रविवेकः.
MĀTṚKĀCAKRAVIVĒKAḤ.

Foll. 92*a*—99*a*. Foll. 89*a*—91*a* contain the Parāpūjāviṣaya. Fol. 91*b* is left blank.

Same work as that described under No. 5693 of the D.C.S. MSS., Vol. XII. By Svatantrānandanātha.

Complete.

Foll. 99*b* and 100 are left blank.

---

## R. No. 4400.

Palm-leaf. 8⅝ × 1¼ inches. Foll. 78. Lines, 8 in a page. Malayalam. Good.

Purchased in 1923-24 from M.R.Ry. V. Veṅkaṭarāma Śarma, Chenganur post, Travancore State.

(*a*) आर्षप्रयोगसाधुत्वनिरूपणम्.
ĀRṢAPRAYŌGASĀDHUTVANIRŪPAṆAM.

Foll. 1*a*—20*a*. Foll. 20*b* and 21 are left blank.

A treatise justifying grammatically the usage of certain words in ancient literature such as Mahābhārata, Bhāgavata, etc., pointed out by certain grammarians to be wrong.

**Beginning:**

प्रणम्य परमात्मानं विमुक्तोपाधिविप्लवम् ।
इतिहासे पदं किञ्चिद्यथाशक्ति निरूप्यते ॥
नूनमार्षप्रयोगोऽयमित्येवोक्ताविहापतेत् ।
अपशब्दाश(श्र)यत्वं वा मुग्धत्वं वा निजं भृशम् ॥
अभिनन्दितसूक्तस्य स्वयमेत्य स्वयम्भुवा ।
वाल्मीकस्य मुनेर्वाचि कोऽवाच्यं वक्तुमर्हति ॥
अधीती शब्दशास्त्राणां षष्टौ द्वैपायनो विभुः ।
कृती निजकृतौ कुर्यात् कथमेवापभाषणम् ॥

तस्मात्पुराणवर्तिनां शब्दानां साधुत्वं विज्ञातव्यम् । सभापर्वणि—शास्यन्ति तेत्मानमिमेऽद्य पाण्डवा विपर्ययात् षण्डतिला इवाफलाः । अत्रात्मशब्दाकारस्य लोपः । मन्त्रेष्वाङ्यादेरात्मनः—आङि परत आत्मन् शब्दस्यादेर्लोपः स्यात् मन्त्रेषु । आङोऽन्यत्रापि दृश्यते लोपः । ननु च मन्त्रेष्विदं वेदापरपर्यायेषु कथितं न पुराणादौ, उच्यते—छन्दोवदार्षं भवति ।

**End:**

श्रीभागवते—अरिहणमुपपेद ईक्षणीयो मम दृशिगोचर एष आविरात्मा । अत्र वृत्तपरिपालनार्थमरिहणशब्दे रेफं हकारं चान्तरा इकारो निवेशितः.

Foll. 22*a*—23*b*, 25*a* and 26 contain a portion of Adhikārasūtra-viṣaya in Vyākaraṇa. Foll. 24*a*, 25*b* and 27 are left blank.

---

(*b*) मुखभूषणम्.
MUKHABHUṢAṆAM.

Foll. 28*a*—70*a*. Foll. 70*b*—78*b* are left blank.
Similar to the work described under subdivision (*a*) of this number.
Apparently complete.

**Beginning:**

नित्यां ज्योतिर्मयीमेकां विग्रहत्रयशालिनाम् ।
परब्रह्मस्वरूपां तां परां वाचमुपास्महे ॥

इह खलु द्विविधाश्शब्दाः—वैदिका लौकिकाश्चेति । वेदे भवा वैदिकाः । यद्यपि लौकिकानां वेदेऽपि वृत्तः, तथाप्यसाधारणवैदिकापेक्षया

ते लौकिका इत्युच्यन्ते । लोक्यते शब्दार्थः पुरुषार्थो वानेति लोको वृद्धव्यवहारः । द्विविधा वृद्धाः—इतिहासज्ञाः काव्यज्ञाश्चेति । तेषां व्यवहारः वृद्धव्यवहारः । तत्र विदिता लौकिकाः । तत्र तावत् कविव्यवहारगोचराः केचन शब्दाः प्रक्रियाणां दुर्लक्ष्यत्वादपशब्दाभासतां प्रतिपन्नाः प्रतीतिस्खलनं सहृदयानामुत्पादयन्ति । किं च—पुरुषस्य स्वविद्यायामथ वणयतस्सतः । पदं प्रत्यनभिज्ञत्वं नैव शोभावहं भवेत् ॥ तस्मात्तेषां व्युत्पत्तिः किञ्चिन्निरूप्यते । यथा—सोढुं न तत्पूर्वमवर्णमीशे आलानितः स्थाणुमिव द्विपेन्द्रः । अत्रायादिसन्ध्यभावदर्शनादपशब्दप्रतीतिर्न कार्या । कथम्? संहितायामित्यस्मिन् सूत्रे विवक्षितायामिति ज्ञाप्यते । तेन विवक्षितस्तु सन्धिर्भवतीत्यर्थस्सेत्स्यति । संहितैव सन्धिः ।

* * * *

Colophon:

इति मुखभूषणे सन्धिविशो(धनं)नाम प्रथमः परिच्छेदः ॥

End:

तथा च भट्टिकाव्ये आश्वासथ निशाचरा इति । तस्मादाश्वसन्त्य इति नुमागमसहितः पाठोऽपि युक्त इति केचित् । तन्न युक्तम्; अन्यथापि रूपसिद्धेः । यत्र हि गणकार्यस्यानित्यत्वमपेक्ष्यैव रूपसिद्धिर्भवति, तत्रैव तदाश्रयणस्य युक्तत्वात् ।

---

R. No. **4401**.

Palm-leaf. 13½ × 1⅛ inches. Foll. 93. Lines, 7 in a page. Grantha. Slightly injured.

Purchased in 1923–24 from M.R.Ry. Śaṅkaranārāyaṇa Dīkṣitar, Stamp-vendor, Bhavani, Coimbatore district

तुलाकावेरीमाहात्म्यम्.

TULĀKĀVĒRĪMĀHĀTMYAM.

Same work as that described under R. No. 97(*a*) ante.

Breaks off in the 35th Adhyāya.

## R. No. 4402.

Palm-leaf. 12 × 1 inches. Foll. 166. Lines, 7 in a page. Grantha. Slightly injured.

Purchased in 1923–24 from M.R.Ry. Śaṅkaranārāyaṇa Dīkṣitar, Stamp-vendor, Bhavani, Coimbatore district.

Foll. 1, 2 and 20 are left blank.

### फुल्लसूत्रभाष्यम्.

### PHULLASŪTRABHĀṢYAM.

Same work as that described under Nos. 937 and 938 of the D.C.S. MSS., Vol. II. By Ajitaśatru.

Wants the beginning ; otherwise complete.

---

## R. No. 4403.

Śrītāla. 9½ × 1⅝ inches. Foll. 136. Lines, 13 in a page. Grantha. Slightly injured.

Purchased in 1923–24 from M.R.Ry. Śaṅkaranārāyaṇa Dīkṣitar, Stamp-vendor, Bhavani, Coimbatore district.

Foll. 1—6 are left blank.

### (*a*) वेदान्तसारः.

### VĒDĀNTASĀRAḤ.

Foll 7*a* - 16*b*.

Same work as that described under No. 4746 of the D.C.S. MSS., Vol. IX. By Sadānanda.

Complete.

---

### (*b*) वेदान्तसारटीका—विद्वन्मनोरञ्जनी.

### VĒDĀNTASĀRAṬĪKĀ : VIDVANMANŌRAÑJANĪ.

Foll. 17*a* –72*a*.

Same work as that described under R. No 1543 ante, wherein see for the beginning. By Rāmatīrtha, disciple of Kṛṣṇatīrtha.

Complete.

**End:**

तथा च श्रुतिः—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ इत्याद्या ॥

विद्यासीतावियोगक्षुभितनिजसुखश्शोकमोहाभिपन्नः
चेतस्सौमित्रिमित्रो भवगहनगतश्शास्त्रसुग्रीवसख्यः ।
हत्वास्ते दैन्यवालिं (वालिदैन्यं) मदनजलनिधौ धैर्यसेतुं प्रबध्य
प्रध्वस्ताबोधरक्षःपतिरधिग(तं)चिज्जानकिः स्वात्मरामः ॥
वेदान्तसारविवृतिं रामतीर्थाभिधो यतिः ।
चक्रे श्रीकृष्णतीर्थश्रीपदपङ्कजषट्पदः ॥

**Colophon:**

इति श्रीवेदान्तसारटीका विद्वन्मनोरञ्जनी समाप्ता ॥

The scribe adds—

आनन्दवत्सरे चैत्रे मासे शुक्ले च पक्षके ।
दर्शे सूर्यग्रहे चन्द्रवासरे लिखितो मुदा ॥

Fol. 72*b* contains one stanza in praise of Jñānēndrasarasvatī.

---

(*c*) योगतारावली.

YŌGATĀRĀVALĪ.

Foll. 73*a*—76*a*.

Same work as that described under No. 4356 of the D.C.S. MSS., Vol. IX. By Nandīśvara. But the stanzas given at the beginning and the end are different from the corresponding stanzas of the manuscript referred to.

Complete.

**Beginning:**

नित्यानन्दाय शुद्धाय (. . .) साक्षिणे ब्रह्मणे नमः
अन्तर्लक्ष्यविलीनचित्तपवनो योगी सदा वर्तते
दृष्ट्या निश्चलतारया बहिरधः पश्यन्नपश्यन्नपि ।
मुद्रेयं खलु खेचरी भवतु सा युष्मत्प्रसादाद्गुरो
भावाभावविवर्जितं स्फुरति यत्तत्त्वं भवेच्छाम्भवी ॥
वन्दे गुरूणां चरणारविन्दे सन्दर्शितस्वात्मसुखावबोधे ।
जनस्य ये जाङ्गलिकायमाने संसारहालाहलमोहशान्त्यै ॥

**End:**

प्रकाशमाने परमात्मभानौ नश्यत्यविद्यातिमिरे समस्ते ।
अहो बुधा निर्मलदृष्टयोऽपि किंचिन्न पश्यन्ति जगत्प्रपञ्चम् ॥
विचरतु मतिरेषा निर्विकल्पे समाधौ
कुचकलशयुगे वा कृष्णसारेक्षणानाम् ।
चरतु जडमते वा सज्जनानां मते वा
मतिकृतगुरुदोषा मां विभुं न स्पृशन्ति ॥

**Colophon:**

इति नन्दीश्वरप्रोक्तयोगतारावली समाप्ता ॥

Fol. 76 gives a small portion of Śivayōgapradīpikā.

---

(*d*) ब्रह्मसूत्रवृत्तिः.

BRAHMASŪTRAVṚTTIḤ.

Foll. 88*a*—133*b*. Foll. 77*a*—87*b* and 134*a*—136*b* are left blank.

A short commentary on the Brahmasūtras written in accordance with the Advaita-Vēdānta. The author, whose name is not given, salutes Kēśavānanda and Śivarāmayōgin.

Complete.

**Beginning:**

योगाध्येयात्मविद्याविमलतरमतिर्यस्सुहृल्लक्ष्मणाब्जो
भूजानन्दप्रदायी निजगुरुवचसा दृश्यसम्पद्विरक्तः ।
तीर्त्वा जित्वा भवाब्धिं विमतनिशिचरान् प्राप्तसुज्ञानलक्ष्मी-
जातानन्दाब्धिरव्याद्रघुपतिरिव नः केशवानन्दयोगी ॥
मध्वागममहाध्वान्तविध्वंसनविचक्षणान् ।
शिवरामाख्ययोगीन्द्रान् प्रणतोऽस्मि निरन्तरम् ॥
आम्नायान्तसमुद्रेषु संसक्तं ब्रह्मसन्मणि ।
सूत्रैस्संरुध्य हृदये धर्तुं यत्नं करोम्यहम् ॥

अथातो ब्रह्मजिज्ञासा—अथ साधनचतुष्टयानन्तरं यस्माद्वेद एवाग्निहोत्रादिकर्मफलानामनित्यत्वं तद्यथेहेत्यादिना दर्शयति । अतः ब्रह्मज्ञानाय विचारः कर्तव्यः । तद्विजिज्ञासस्वेत्यादिविषयवाक्यम् । कीदृशं ब्रह्मेत्याकाङ्क्षायां तस्य लक्षणमाह—जन्माद्यस्य यतः ।

* * * *

**Colophon:**

प्रथमाध्याये प्रथमः पादः ॥

**End :**

अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्--अर्चिरादिमार्गेण ब्रह्मलोकं गतानामनावृत्तिः; कु(कु)तः? न च पुनरावर्तते, इमं मानवमावर्तं नावर्तन्ते तेषामिह न पुनरावृत्तिः इत्यादिशब्दादनुमानस्य शब्दविरोधे कालात्ययापदिष्टत्वेनानुत्थानमिति । अभ्यासश्शास्त्रपरिसमाप्त्यर्थः ॥

रामग्रहेन्दुसङ्ख्याता (३९१) न्याया वैयासिकाः स्मृताः ॥

**Colophon :**

चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

शङ्करं शङ्कराचार्यं केशवं बादरायणम् ।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ॥

---

## R. No. 4404.

Palm-leaf. 11¼ × 1¼ inches. Foll. 115. Lines, 8 in a page. Grantha. Good.

Purchased in 1923-24 from M.R.Ry. Śaṅkaranārāyaṇa Dikṣitar, Stamp-vendor, Bhavani, Coimbatore district.

(*a*) सिद्धान्तकल्पवल्ली, सव्याख्या.

SIDDHĀNTAKALPAVALLĪ WITH COMMENTARY.

Foll. 1*a*—47*a*. Fol. 47*b* is left blank.

An easy epitome of the doctrinal differences among the Advaitins, as set forth in Appayadīkṣita's Siddhāntalēśasaṅgraha, which work has been described under No. 4764 of the D.C.S. MSS., Vol. IX. The text, as well as the commentary called Kēsaralavalī, is by Sadāśivēndrasarasvatī, who was a disciple of Paramaśivēndrasarasvatī.

Complete in four Stabakas.

**Beginning :**

स्वाज्ञानेन विवर्तते त्रिभुवनाकारेण यस्सर्वतः
स्वस्मै यस्स्वयमेव चोपदिशति स्वं शिष्यगुर्वात्मना ।
स्वज्ञानेन च योऽद्वितीयसुखसद्बोधात्मना शिष्यते
तस्मै विस्मयनीयशक्तिनिधये कस्मै चिदस्मै नमः ॥

सिद्धान्तलेशसङ्ग्रहाख्यग्रन्थे वर्णितानां मतानां सुखेनावधारणार्थं चिकीर्षितस्य सिद्धान्तकल्पवल्ल्याख्यस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय कृतमिष्टदेवतोपासनालक्षणं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—(अङ्कुरितेति) ।

अङ्कुरितबोधमुद्रिकमपसव्योरूपरिस्थसव्यपदम् ।
वस्त्वेकमनुसरामो वटभूरुहमूलवास्तव्यम् ॥

अङ्कुरिता सञ्जाताङ्कुरा स्फुरन्ती बोधमुद्रिका यस्य तथोक्तम् । अपसव्योरूपरिस्थसव्यपदम् अपसव्यस्य दक्षिणस्योरोरुपरि तिष्ठतीत्युपरिस्थं सव्यं वामं पदं पादं(दः) यस्य तथोक्तम् । एतेन वीरासनासीनत्वमुक्तं भवति ।

* * * *

यदपाङ्गितः प्रबोधो भवदुस्स्वप्नावसानकरः ।
तमहं परमशिवेन्द्रं वन्दे गुरुमखिलतन्त्रजीवातुम् ॥

यदपाङ्गितः येनापाङ्गितः कटाक्षितः प्रबोधो जीवब्रह्मैक्यगोचरस्साक्षात्कारः भवदुस्स्वप्नावसानकरः भवस्संसारो मिथ्यापरिकल्पितत्त्वस्स एव(दु)स्स्वप्नः सकलानर्थभाजनत्वात्तस्यावसानकरः सवासनोच्छेदकरः । ज्ञानेनाज्ञानोच्छेदे तत्कार्यसंसारोच्छेदस्यावश्यम्भाव्यत्वात् ।

* * * *

चिकीर्षितं प्रतिजानीते—

सिद्धान्तलेशसङ्ग्रहवर्णितनानामतावधानाय ।
हृद्यैरहं कतिपयैः पद्यै रचयामि कृतिमेताम् ॥

हृद्यैः बह्वर्थसूचकसरलपदगुम्भितत्वेन मनोहरैः एतां चिकीर्षितत्वेन बुद्धिस्थां कृतिं सिद्धान्तकल्पवल्ल्याख्यामित्यर्थः ।

* * * *

इत्थं प्रत्यगभिन्नो ब्रह्मणि वेदान्तवाक्यानाम् ।
तात्पर्येणान्वयतो जीवपराभेदसंसिद्धिः ॥

**Colophon:**

इति श्रीवेदान्तसिद्धान्तकल्पवल्लीव्याख्यायां केसर(ल)वल्याख्यायां प्रथमस्स्तबकः समाप्तः ॥

**End**

परमानन्दाद्वितीयाखण्डैकरसब्रह्मात्मनावस्थानमिति परमसिद्धान्तमाह—

परमार्थतस्तु मुक्तस्सर्वेशत्वादिधर्मनिर्मुक्तम् ।
विगलितसर्वविकल्पं विमलं ब्रह्मैव केवलं भवति ॥

**Colophon :**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्परमशिवेन्द्रसरस्वतीपादाब्जसेवापरायणेन श्रीमत्सदाशिवेन्द्रसरस्वत्या विरचितायां श्रीमद्वेदान्तसिद्धान्तकल्पवल्लीव्याख्यायां केसरवल्लयाख्यायां चतुर्थस्स्तबकस्सम्पूर्णः ॥

---

(*b*) दक्षिणामूर्त्यष्टकव्याख्या—तत्त्वसुधा.

DAKṢIṆĀMŪRTYAṢṬAKAVYĀKHYĀ : TATTVASUDHĀ.

Foll. 48*a* –65*a*.

Same commentary as that described under No. 10992 of the D.C.S. MSS., Vol. XIX. By Svayaṁprakāśayati, disciple of Kaivalyānandayōgin.

Complete.

---

(*c*) दक्षिणामूर्त्यष्टकम्.

DAKṢIṆĀMŪRTYAṢṬAKAM.

Foll. 65*a*—66*b*.

Same work as that described under R. No. 118(*b*) ante. By Śaṅkarācārya.

Complete.

---

(*d*) पञ्चदशी, सव्याख्या.

PAÑCADAŚĪ WITH COMMENTARY.

Foll 67*a*—107*b*.

Same work as that described under No. 4615 of the D.C.S. MSS., Vol. IX. The text is by Vidyāraṇya and the commentary by Rāmakṛṣṇa.

Contains 239 stanzas in the Citradīpaprakaraṇa.

Fol. 108*a* contains Advaitaviṣaya. Fol. 108*b* is left blank.

---

(*e*) नागप्रतिष्ठाविधिः.

NĀGAPRATIṢṬHĀVIDHIḤ.

Foll. 67*a*—107*b*.

Same work as that described under No. 3652 of the D.C.S. MSS., Vol. VII.

Incomplete.

(*f*) आशुगरुडमन्त्रः.
ĀŚUGARUḌAMANTRAḤ.

Foll. 114*a*—115*a*. Fol. 115*b* is left blank.

Same work as that described under No. 5989 of the D.O.S. MSS., Vol. XII.

Incomplete.

---

R. No. **4405.**

Palm-leaf. 14½ × 1¼ inches. Foll. 89. Lines, 10 in a page. Grantha. Slightly injured.

Purchased in 1923-24 from M.R.Ry, Śaṅkaranārāyaṇa Dīkṣitar, Stamp-vendor, Bhavani, Coimbatore district.

Foll. 1 and 2 are left blank.

(*a*) खादिरगृह्यसूत्रम्.
KHĀDIRAGṚHYASŪTRAM.

Foll. 3*a*—44*b*.

Same work as that described under R. No. 38(*c*) ante. By Rudraskanda.

Complete.

शङ्करनारायणस्वहस्तलिखितम्.

---

(*b*) अग्निष्टोमहौत्रक्लृप्तिः.
AGNIṢṬOMAHAUTRAKḶPTIḤ.

Foll. 45*a*—78*b*.

Same work as that described under R. No. 164(*a*) ante; but with additional passages at the end, which are given below:—

पिप्रीहित्यादि । ये यजामहेऽग्निं स्विष्टकृतमग्ने यदद्य या ते—अद्या—वौ—इळाभक्षणान्तं सन्तिष्ठतेऽग्निष्टोमोऽग्निष्टोमः ।

पौण्डरीकस्य पशुक्लृप्तिः— आग्नेयश्छागः—प्रथमेऽहनि, द्वितीयतृतीययोरैन्द्राग्नौ छागौ, सारस्वती मेषी चतुर्थे, पञ्चमे सावित्रश्छागः । षष्ठे सौम्यच्छागः, सप्तमे वैश्वदेवच्छागः, अष्टमे पौष्णच्छागः, नवमे मारुतच्छागः, दशमे बार्हस्पत्यच्छागः, एकादशे वारुणो विगतपुंस्को मेषः॥

**Colophon:**

सम्पूर्णा पौण्डरीकपशुक्लृप्तिः ॥
शङ्करनारायणस्वहस्तलिखितम् ॥

(c) सामवेदगानम्—प्रकृतिः.

SĀMAVĒDAGĀNAM : PRAKṚTIḤ.

Foll. 79a—86b. Foll. 87—89 are left blank.

Same work as that described under No. 46 of the D.C.S. MSS., Vol. I, Part I.

Incomplete.

---

R. No. 4406.

Palm-leaf. 11½ × 1 inches. Foll. 62. Lines, 7 in a page. Grantha. Slightly injured.

Purchased in 1923–24 from M.R.Ry. Śaṅkaranārāyaṇa Dīkṣitar, Stamp-vendor, Bhavani, Coimbatore district.

(a) कुमारसम्भवः.

KUMĀRASAMBHAVAḤ.

Foll. 1a—7a. Fol. 7b is left blank.

Same work as that described under No. 11494 of the D.C.S. MSS., Vol. XX.

Contains the first Sarga complete.

---

(b) रघुवंशम्.

RAGHUVAṀŚAM.

Foll. 8a—13a. Fol. 13b is left blank.

Same work as that described under No. 11636 of the D.C.S. MSS., Vol. XX.

Contains the IV Sarga incomplete.

---

(c) सिद्धान्तलेशसङ्ग्रहः.

SIDDHĀNTALĒŚASAṄGRAHAḤ.

Foll. 14a—20a. Foll. 20b—21b are left blank.

Same work as that described under No. 4764 of the D.C.S. MSS., Vol. IX. By Appayadīkṣita.

Contains the first Paricchēda incomplete.

---

(d) सिद्धान्तबिन्दुव्याख्या.

SIDDHĀNTABINDUVYĀKHYĀ.

Foll. 22a—62b.

A commentary on Madhusūdanasarasvati's Siddhāntabindu which itself is a commentary on Śaṅkarācārya's Daśaślōkī, which work has been described under No. 4599 of the D.C.S. MSS, Vol. IX.

Incomplete.

**Beginning :**

इह खलु सर्वोऽपि जनः सुखं दुःखाभावं च कामयते—इति सर्वानुभवसिद्धम् । तदुभयरूपश्चात्मैव तस्यैव स्वारसिकेष्टत्वात् । तत्र यद्यपि सुखमात्मरूपतया नित्यप्राप्तं, ततो दुःखमपि नित्यपरिहृतमेव; तथापि अनिर्वचनीयानाद्यविद्यया तयोरतथात्वभ्रमात् सांसारिकसुखाभासप्राप्तये दुःख हानये च रागद्वेषास्पदानेककर्माण्याचरन् तज्जनितसुखाभासानेवानुभवन् सर्वोऽपि जीवो दुरन्तदुर्वारसंसारचक्रे बम्भ्रमीति । अतस्सर्वानर्थहेतुरा-त्मावबोधः

* * * *

मन्दमध्यमयोरफलायैवेति मत्वा शिष्टाग्रणीर्ग्रन्थकारः कमपि निबन्धं बह्वर्थ-महं(यं) करिष्यन् तस्य निर्विघ्नपरिसमाप्तये गुरुदेवतानमस्कारात्मकं मङ्गलं शिष्यान् शिक्षयितुमादौ निबध्नन् ग्रन्थारम्भं प्रतिजानीते--श्रीशङ्करेत्यादि । तथा च शङ्कराचार्यरूपेण नवतयावतीर्णं विश्वेश्वरं प्रणम्येत्यर्थः । विश्वे-श्वरमित्यनेन शास्त्रार्थेष्वनावरणं ज्ञापितम् ।

* * * *

प्रेक्षावत्प्रवृत्तये विषयप्रयोजनाधिकारिसम्बन्धान् प्रदर्शयन् भूमिकामा-रचयति--इहेत्यादि । इह भुवि खलु वाक्यालङ्कारे साक्षात् ब्राह्मणादीन् परम्परया मनुष्यादिभावप्राप्त्या कीटादीन् समुद्दिधीर्षुः दुःखेनात्यन्तं विमुमोचयिषुः भगवान् ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्य-स्याथ मोक्षस्य षण्णां भग इत्युक्तषड्गुणवान् श्रीशङ्करः मोक्षश्रीमान् शङ्कराचार्यः अनात्मभ्योऽविद्यातत्कार्येभ्यो विवेकेन भेदेनानात्मप्रतियोगिकभेदे-नोपलक्षितमात्मानं बोधयितुमित्यर्थः ।

**End :**

स्वमते प्रतिबन्दिशङ्कामपा(स्य)परमते तामाह—आकाशेति । घटपटा-द्युपाधिपुरस्कारेणैव भिन्नतया प्रतीयमा(मा)नस्य वस्तुनः स्वतो भेदाङ्गीकारेषु घटाकाशो मठाकाशाद्भिन्नः, पूर्वकालो नोत्तरकालः, प्राची न प्रतीचीत्यादि-प्रत्ययैराकाशकालदिशामपि स्वरूपतो नानात्वापत्तेः.

## N. No. 4407.

Palm-leaf. 12¼ × 1⅛ inches. Foll 36. Lines, 9 in a page. Grantha. Slightly injured.

Purchased in 1923–24 from M.R.Ry. Śrīnivāsācāriyar, East Chitra street, Srirangam, Trichinopoly district.

Foll. 34*b*—36*b* are left blank.

योगयाज्ञवल्क्यम्.

YŌGAYĀJÑAVALKYAM.

Same work as that described under R. No. 2831 ante.

Complete in 12 Adhyāyas.

---

## R. No. 4408.

Palm-leaf. 15¼ × 1 inches. Foll. 69. Lines, 6 in a page. Grantha and Tamil. Slightly injured.

Purchased in 1923–24 from M.R.Ry. Śrīnivāsācāriyar, East Chitra street, Srirangam, Trichinopoly district.

क्रियाकैरवचन्द्रिका.

KRIYĀKAIRAVACANDRIKĀ

Foll. 1*a*—66*a*.

Same work as that described under R. No. 3204 ante. By Varāhaguru.

Contains the Paricchēdas 21, 10 and 29 which also break off in many places.

Fol. 67*a* gives Garuḍapratiṣṭhā portion. Fol. 68 contains the Mudrālakṣaṇa. Foll. 66*b*, 67*b* and 69 are left blank.

---

## R. No. 4409.

Palm-leaf. 16⅝ × 1 inches. Foll. 34. Lines, 5 in a page. Grantha. Slightly injured.

Purchased in 1923–24 from M.R.Ry. Śrīnivāsācāriyar, East Chitra street, Srirangam, Trichinopoly district.

वेदान्ताचार्यचम्पुव्याख्या.

VĒDĀNTĀCĀRYACAMPUVYĀKHYĀ.

Foll. 1*a*—30*a*.

Similar to the work described under No. 12372 of the D.O.S. MSS., Vol. XXI.

Contains the Stabakas one to five only.

**Beginning:**

कोमलवल्ल्युपगूढं कृतवसतिं कनककमलिनीकूले ।
कलयामि कल्पवृक्षं काङ्क्षितदं कलितशाङ्गर्चभिधम् ॥

अनुकलमनुक्षणम् । ददन्तामिति । कालिन्दीति । कालिन्दीकुवलयैस्सह । कचग्राहिण्यः कचग्रहणपूर्वकयुद्धकारिण्यः । झरीति झर्यो परिवाहतया क्रीडन्ती पङ्क्तिशः क्रीडमानेत्यर्थः । कूलङ्कषा लोपकराः । प्रणिपतति प्रणामवति पुंसि । विस्तार्येत्यनन्तरमेतद्रूपानिति विहारविशेषणमध्याहार्यम् ।

* * * *

**Colophon:**

इत्याचार्यचम्पुव्याख्यायां प्रथमस्स्तबकः ॥

**End:**

काश्ची मेखला पुरीविशेषश्च । विशाला विस्तीर्णा पुरीविशेषश्च । (महोदया)त्मा अत्युपचितस्वरूपः महोदयाख(रूय)पुरीस्वरूपश्च । वनं सलिलं काननं च । . . . यित्वेन राज्ञा सूर्येण च । चक्राकृती चक्रवाकसदृशौ मण्डल . . . . . अतिशेने इति । एकृकमलाप्रदर्शकं समुद्रमतिशेत इत्यर्थः । मुमुदेतराम् भृशमानन्दाति स्म ॥

**Colophon:**

इत्याचार्यचम्पुव्याख्याने पश्चमस्स्तबकः ॥

Foll. 31*a*—34*a* contain a portion of Nānārthavarga. Foll. 30*b* and 34*b* are left blank.

---

## R. No. 4410.

Palm-leaf. 15⅝ × 1⅛ inches. Foll. 87. Lines, 10 in a page. Grantha. Slightly injured.

Purchased in 1923-24 from M.R.Ry. Śrīnivāsācāriyar, East Chitra street, Srirangam, Trichinopoly district.

### आचारनवनीतम्.
### ĀCĀRANAVANĪTAM.

Same work as that described under R Nos. 49(*b*) and 422 ante. By Appādīkṣita.

Contains the Śrāddhakāṇḍa incomplete.

## R. No. 4411.

Palm-leaf. 15½ × 1 inches. Foll. 96. Lines, 7 in a page. Grantha. Slightly injured.

Purchased in 1923–24 from M.R.Ry. Śrīnivāsācāriyar, East Chitra street, Srirangam, Trichinopoly district.

### अभिज्ञानशाकुन्तलव्याख्यानम्—कुमारगिरिराजीयम्.

### ABHIJÑĀNAŚĀKUNTALAVYĀKHYĀNAM: KUMĀRAGIRI-RĀJĪYAM.

Same work as that described under R. No. 295(*b*) ante. By Kāṭaya Vēmabhūpati, son of Kāṭayabhūpati.

Complete.

Foll. 95 and 96 are left blank.

---

## R. No. 4412.

Palm-leaf. 15¾ × 1⅛ inches. Foll. 54. Lines, 7 in a page. Grantha and Tamil. Much injured.

Purchased in 1923–24 from M.R.Ry, Śrīnivāsācāriyar, East Chitra street, Srirangam, Trichinopoly district.

### (*a*) रामायणसारसङ्ग्रहदीपिका.

### RĀMĀYAṆASĀRASAṄGRAHADĪPIKĀ.

Foll. 1*a*—38*b*.

A treatise purporting to give the time of the occurrence of the leading events in the life of Śrī-Rāma: by Cakravarti Vēṅkaṭācārya.

Contains the Paricchēdas one and two complete.

**Beginning:**

सम्प्राप्तार्जुन . . . . . . . . : . दितोज्जृम्भणं
मुश्चन्तं शरदृष्टिविश्रितधनुर्वेल्लत्तटित्प्रोज्ज्वलम् ।
सन्मार्गाश्रयमुल्लसद्दशमुखाशोत्कर्षरोषोदयं
प्रौढश्रीकमहं भजामि सततं श्रीरामकालाम्बुदम् ॥
श्रीमद्रामायणस्येयं सारसङ्ग्रहदीपिका ।
उपजीव्य कृतिं प्राचां वेङ्कटार्येण तन्यते ॥
प्रकाश्यन्ते जन्मवर्षमासर्तुदिवसादयः ।
रामस्य वनवासेषु वत्सराश्च वयांस्यपि ॥

जातो वर्षे विलम्बिन्यजजुषि मिहिरे जाग्रतीन्दौ नवम्यां
सौम्येऽब्दे मासि मीने जनकनृपसुतां पूर्णिमायामुदूह्य ।
दुन्दुभ्यब्देऽथ चैत्रे विपिनमधिजगौ मासि मीने युवाब्दे
हत्वा शत्रून् स धातौ खलु मधुसमये राघवो राज्यमाप ॥

इह खलु निखिलजगदुदयाविभव(लय)लीलाविनोदशीलो भगवान् परमकारुणिकः श्रीमान्नारायणः दशमुखभुजबलविलोपितसम्पद्भिर्निलिम्पैरत्यर्थमभ्यर्थितो धर्मसंस्थापनार्थाय

* * * *

श्रीरामचन्द्ररूपेणावततार । रामायणे—

ततस्तु द्वादशे मासि चैत्रे नावमिके तिथौ ।
नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ॥
ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ।
प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ॥
कौसल्याजनयद्रामं

इति तिथ्यादिनिर्णय उक्तः ।

* * * *

**Colophon:**

इति चक्रवर्तिवेङ्कटाचार्यकृतिषु रामायणसारसङ्ग्रहदीपिकायां बालकाण्डस्समाप्तः ॥

* * * *

इति श्रीरामचन्द्रपट्टाभिषेकोत्सवः । अनन्तरम्—

दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥

अब्दे यौ(वे)पटीरानिलचलसुमनोमञ्जुगुञ्जन्मिलिन्दे
मासे चैत्रे समुद्यद्रजनिकरकरश्रीवलक्षेऽपि पक्षे ।
सप्तम्यां पुष्यतारे शुभगण . . . . . गोज्ज्वले मेषलग्ने
श्रीमान् पट्टाभिषिक्तस्सह जनकभुवा रामचन्द्रोऽवतान्नः ॥

इति प्रथमः परिच्छेदः ॥

**End:**

सुवेलारोहणसमयस्य पूर्णिमात्वे स्पष्ट एव मन्त्रं कृत्वा प्रसुप्तायामीति रावणवचनविरोध इति सुधीभिर्विभावनीयमिति दिक् ॥

सम्प्राप्ताष्टशताधिकद्वियुगसाहस्रात्परं षष्टिभिः
सङ्ख्याभिस्सचतुर्भिरप्यपगतेष्वब्देषु तुर्ये युगे ।
श्रीवत्सान्वयवेङ्कटार्यविदुषा वाल्मीकिवाचामयी
काचित्सङ्ग्रहदीपिका विरचिता तन्यात् प्रमोदं सताम् ॥

**Colophon:**

इति चक्रवर्तिवेङ्कटाचार्यकृतिषु श्रीरामायणतात्पर्यसङ्ग्रहदीपिकायां द्वितीयः परिच्छेदः ॥

---

(b) रहस्यत्रयसाराधिकारसङ्ग्रहः.
RAHASYATRAYASĀRĀDHIKĀRASAṄGRAHAḤ.

Foll. 40a—46b.

Same work as that described under No. 5343 of the D.C.S. MSS., Vol. XI. By Vēdāntācārya.

Wants the beginning; otherwise complete.

Fol. 39 is left blank. Foll. 46b—47b contain the Vēṅkaṭēśasuprabhāta. Foll. 48—51b give the contents of the Rahasyatrayasāra. Foll. 53 and 54 are left blank.

---

R. No. **4413.**

Palm-leaf. $12\frac{1}{8} \times 1$ inches. Foll. 60. Lines, 7 in a page. Grantha. Good.

Purchased in 1923-24 from M.R.Ry. Śrīnivāsācāriyar, East Chitra street, Srirangam, Trichinopoly district.

Fol. 1a contains the name of the owner of this MS. Fol. 1b is left blank.

सङ्ग्रहरत्नाकरः.
SAṄGRAHARATNĀKARAḤ.

Foll. 2a—45a. Foll. 45b—60b are left blank.

A treatise on Dharmaśāstra containing texts taken from various sources, connected with the daily duties to be performed by a Śrī-Vaiṣṇava.

Wants the beginning and incomplete.

**Beginning:**

. . . . . . . . . व्यवस्थात्रे युगे युगे ।
लीलयैव गृहीतेच्छावपुषे विष्णवे नमः ॥

यत्प्रेष्या ब्रह्मरुद्राद्या या दिव्याज्ञा श्रुतिः स्मृतिः ।
यः प्रातुज्यहर्ता(?) तस्मै परस्मै हरये नमः ॥
काल्योद्बोधोऽच्युताङ्घ्रिस्मरणमुषसि च स्नानमर्घ्यं जपोऽग्नौ
होमं च ब्रह्मयज्ञो हितभजनमथ स्नानमध्याह्नकृत्ये ।
विष्ण्वर्चा वैश्वदेवं मखविधिरशनं सत्प्रबन्धानुसन्धा
सन्ध्याहोमार्चनान्तं श्रुतिमननमिति प्रत्यहं सच्चरित्रम् ॥
अथाह्निकमुच्यते । आह्निकं नामाह्नि भवं सच्चरितं तच्च सङ्ग्रहेणोक्तम् ।
अत्र मनुः—

ब्राह्मे मुहूर्ते उत्थाय धर्मार्थावनुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान् वेद[ान्] तत्त्वार्थमेव च ॥
वेदतत्त्वार्थः परमात्मा ।

शाण्डिल्यश्च—

उच्चैः स्वरेण यो गातुमिच्छेत् स्तोत्रैरनन्यधीः ।
वासुदेवादिदेवानां नामसङ्कीर्तनं चरेत् ॥

रत्नावल्याम्—

ब्राह्मे मुहूर्ते निद्रां च कुरुते सर्वदा तु यः ।
अशुचिं तं विजानीयादनर्हस्सर्वकर्मसु ॥
रात्रेस्तु पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते ।
* * * *
शुचे(चौ) यत्नः सदा कार्यस्तन्मूलो हि द्विजः स्मृतः ।
शौचाचारविहीनं स्यात्स(नस्य स)र्वाः स्युर्निष्फलाः क्रियाः ॥

अथाचमनविधिः—तत्र याज्ञवल्क्यः—

अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः ।
पायाद्ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥

**End:**

ऊर्ध्वपुण्ड्रं मृदा धार्यं विप्रेण ब्रह्मवादिना ।
उद्धृतासीति मन्त्रेण वैष्णवेन विशेषतः ॥ इति ।

नारदीये चैतन्निरुक्तम्—

ऊर्ध्वगत्यां तु यस्येच्छा तस्योर्ध्वपुण्ड्रमुच्यते ।
ऊर्ध्वं गत्वा तु देवत्वं संप्राप्नोति न संशयः ॥

ऊर्ध्वं नयति यत् पुण्ड्रं प्राणिनः पापकारिणः ।
तस्याख्या ह्यूर्ध्वपुण्ड्रेति तस्मात् तद्धारयेद् द्विजः ॥

---

R. No. **4414.**

Palm-leaf. 15½ × 1⅛ inches. Foll. 18. Lines, 7 in a page. Grantha and Tamil. Slightly injured.

Purchased in 1923–24 from M.R.Ry. Śrīnivāsācāriyar, East Chitra street, Srirangam, Trichinopoly district.

Foll. 10*b*, 11*a* and 13*b* are left blank.

**अर्चादर्पणम्.**

ARCĀDARPAṆAM.

A treatise on the importance of image-worship in accordance with the Śrī-Vaiṣṇava school.

Wants the beginning and the end.

**Beginning:**

वेदसमाजस्थानामर्चाविषये विज्ञापने प्रथमाध्याये अर्चाविषयसाधक-बाधकप्रमाणविचारः क्रियत इति प्रतिज्ञायाचैव ब्रह्मेत्यस्मत्स्निग्धाः नेति वयमिति विप्रतिपत्तिं प्रदर्श्यार्चायां ब्रह्मत्वस्थापनं तदुपासनस्य साधुत्वस्थापनं स्निग्धैः कर्तव्यमित्युक्तम् । तदस्मत्सिद्धान्ताज्ञानविजृम्भितम् । तथा हि—अर्चा हि अदृश्या सती अदृश्यभूतब्रह्मशरीरं, लोके अर्चेति व्यवह्रियमाणं परिदृश्यमानं बिम्बं तु ध्यानविषयीभूतब्रह्मविशेषणीभूतार्चारूपशरीराधिष्ठानं सत् तस्य स्फोरकम् । अत एव तत्रार्चेति व्यवहारो गौणः । अत एव श्रीरहस्यत्रयसारे तत्त्वत्रयाधिकारे भक्तानुग्रहाय बिम्बाकृत्यात्मना बिम्बे समागत्यावतिष्ठते । इति प्रमाणोक्तप्रकारेण परिदृश्यमानबिम्बसमसंस्थानाप्राकृ(त)विग्रह एवार्चेति अस्मदाचार्यपादैर्निरूपितम् ।

**End:**

यदपि अप्रबुद्धपदस्य लक्षणया शूद्रपरत्ववर्णनम्; तदप्याग्रहकृतम् । प्रकृष्टबोधराहितार्थकाप्रबुद्धपदस्य शक्त्यङ्गीकारे बाधकाभावेन लाक्षणिकार्थस्वीकारस्यानुचितत्वात् स्ववाक्यस्वारस्यानुरोधेन प्रमाणान्तरानुरोधेन वा लाक्षणिकार्थः पदानां स्वीकार्यतयास्तीति । प्रत्युत शक्यार्थस्वीकार एव स्वस्वारस्यं प्रमाणान्तरस्वारस्यं चास्तीति । तर्हि कोऽर्थ इति चेत्.

## R. No. 4415.

Palm-leaf. 14 × 1⅝ inches. Foll. 95. Lines, 9 in a page. Grantha and Tamil. Slightly injured.

Purchased in 1923-24 from M.R.Ry. Śrīnivāsācāriyar, East Chitra street, Srirangam, Trichinopoly district.

### रहस्यत्रयव्याख्या—तात्पर्यदीपिका.

### RAHASYATRAYAVYĀKHYĀ : TĀTPARYADĪPIKĀ.

Foll. 1*a*—67*b*. Fol. 24*b* is left blank.

Same work as that described under R. Nos. 15 and 1311 ante. By Vīrarāghava, son of Rāmānujācārya of Śrīśaila family.

Contains the Mūlamantrādhikāra and Caramaślōkādhikāra. Foll. 68—80 are left blank. Fol. 81 contains a small portion of Hētvābhāsasāmānyalakṣaṇānugama. Foll. 81*b*—83*a* contain a portion of Prapañcamithyātvabhaṅga in accordance with the Viśiṣṭādvaita school. Foll. 83*a*—85*b* contain a portion of Trividhaparicchēdarāhityavicāra. Foll. 85*b*—87*a* contain a portion of Prathamanacavicārānugama. Foll. 87*b*—88*b* are left blank. Foll. 89*a*—95*b* contain the Gacchadvicāra on Nyāyaśāstra.